429

॥ श्रीः ॥

# परशुरामचरितम् ॥

---

व्याकरणशिरोमणि

देवरकोण्ड-वेङ्कटेश्वरशास्त्रि-

विरचितम्



# PARASURAMA CHARITAM

(Reprint from THE UDYANA PATRIKA)

BY

Devarakonda VENKATESWARA SASTRI
Vyakarana Siromani
Sanskrit Pandit, Board High School
Parvatipuram.

---

Printed at THE SRINIVASA PRESS
Tiruvadi.

1934

Price] [Annas 8

# शोधानिका ॥

| Page | Line | For | Read |
|---|---|---|---|
| १ | १५ | तस्य | तस्मै |
| ५ | १५ | तस्मिन्नेव सरसि | तदेव सरः |
| ७ | १९ | यमधीने | मदधीने |
| ९ | ७-८ | अनयञ्च | अनमञ्च |
| १४ | १७ | तोर्थे | तीर्थे |

॥ श्रीः ॥

# विज्ञापना ॥

विदितमेव खलु तत्रभवतां सर्वेषां दशस्ववतारेषु भगवतो महाविष्णोरयमन्यतमः परशुरामावतार इति । अस्य चरितं पुराणेषु, काव्यनाटकादिषु तत्र तत्र किंचित् किंचित् दृश्यते । नत्वेकत्र नापि वचनभागे; अतोऽहं वचनरूपेण बालानां यथा सुबोधं तथा व्यरचयम् । अत्रस्थान् गुणान् परिगृह्य दोषान् सादरं प्रकटयन्त्विति पाठकमहाशयान् सविनयं सप्रणाममभ्यर्थयामि ।

अस्य ग्रन्थस्य ब्रह्माण्डपुराणम् , महाभारतम्, श्रीमद्वाल्मीकिरामायणं च मूलानि भवन्ति । तत्र तत्र केचन श्लोका महाभारतात् गृहीताः ।

अस्य ग्रन्थस्य पठने , दोषाणां प्रकथने च बद्धादरेभ्योऽस्मत्प्रियमित्रेभ्यो ब्र-श्री-विद्वान् के.काव्येशमहाशयेभ्यो भूयांसि नमांसि समर्पयामि ।

अस्य मुद्रणे सादरं दत्ताभयान् सहृदयहृदयान् उद्यानपत्रिकानिर्वाहकसम्पादकमहाशयान् मीमांसार्णव, मीमांसाकेसरि-M.O.L. शिरोमणीत्यादिबिरुदाङ्कितान् श्री D.T. ताताचार्यवर्यान् साञ्जलिबन्धं प्रणमामि ।


Board High School,<br>
Parvatipuram. Vizag Dt.<br>
20—5—34

बुधविधेयः<br>
देवरकोण्ड वेङ्कटेश्वरशास्त्री<br>
व्याकरणशिरोमणिः<br>
संस्कृतोपाध्यायः

# अभिप्रायः ॥

पार्वतीपुर-आङ्गलकलाशाला-संस्कृतपण्डितेन ब्रह्म-श्री D. वेङ्कटेश्वरशास्त्रिणा व्याकरणशिरोमणिना विरचितमिदं परशुरामचरितं यद् वयमुद्यानपत्रिकायां प्राचीकशाम तत्र न परमस्मदीयः पण्डितानां विविधग्रन्थरचनोत्साहाभिवर्धन-दृढसङ्कल्पः कारणम्, अपि तु अस्य गद्यमयस्य प्रबन्धस्य महद्रामणीयक-मपि । परमपावनभगवदवतारविशेषचरितप्रतिपादनपरत्वे एकतः स्थिते, विशुद्धप्रसन्नशैलीविशेषपरिष्कृतगद्यरूपत्वमप्यत्र श्लाघास्पदम् । विरला हि सम्प्रति लोके पण्डिताः ये गद्यमयप्रबन्धनिर्माणकुतूहलिनः ।

यथा भाषान्तरेषु तथा संस्कृते न भूयिष्ठा तादृशा गद्यप्रबन्धाः यान् सकुतूहलं निरन्तरमनुवाच्य विद्यार्थिनोऽस्यां भाषायामावश्यकं परिचय-विशेषं सम्पादयेयुः । चिराच्च वयमिदमभिदधाना वर्तामहे यद् यथेदानीं लोके गद्यमयानां संस्कृतप्रबन्धानामावश्यकता, न तथा पद्यमयानामिति ।

तदेवमत्युपयुक्तमिदं परशुरामचरितं स्वस्वकलाशालायां पाठ्यग्रन्थ-तया परिकल्पयन्तः पण्डिताः अस्य शास्त्रिमहाशयस्य परिश्रमं सफलीकुर्यु-रिति, एवंविधग्रन्थान्तरलेखने अस्य उत्साहं जनयेयुरिति च प्रतीक्षामहे ।

तन्त्रोद्यानम्, तिरुवादि
24—5—34

D. T. Tatacharya.



# परशुरामचरितम् ॥



'परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥'

इति सूक्त्यनुसारेण किल सृष्टिस्थितिलयकारणभूतो भगवान् रमापतिर्महीतले दुष्टशिक्षासाधुरक्षणार्थं प्रतियुगमवतराति । भगवतो रमापतेरवतारेषु दश मुख्यतमा दृश्यन्ते । तेष्वयं परशुरामावतारः षष्ठो भवति ।

पुरा ऋचीकनामा भृगुपुत्रो विवाहार्थी कन्यां कामयमानः पर्यटन् कान्यकुब्जं जगाम । तस्य विषयस्य परिपालयिता गाधिर्नाम राजाऽऽसीत् । तेन भूपतिना यथार्हं सत्कृतः स ऋचीकः 'भो राजन्यवर ! गाधे ! विवाहार्थी त्वामहं सम्प्राप्तः । तन्नवयौवनेन विराजमानां रूपवतीं सुशीलां सत्यवतीनाम्नीं त्वदीयां कन्यां मह्यं दत्वा यथाविधि परिणयं कारय' इति तं प्रार्थयामास । सोऽपि नरपतिस्तद्वचनमाकर्ण्य तदीयं मनोरथं चावगम्य, विस्मितः सुचिरमालोच्यैवमवदत्— 'महर्षिसत्तम ! त्वदीयं मनोरथं निशम्य नितरामहं तुष्टोऽस्मि । किं तु एष आचारो मदीये वंशे कुलक्रमागतः —यः सहस्रमश्वानां हंसपांडुराणां नीलोत्पलश्यामकर्णानां कन्यकायै शुल्कं प्रदास्यति, तस्य कन्या प्रदेया' इति । निशम्य स मुनिरपि तदीयं वचनम्, विस्मयाकुलचेताः, तादृशसहस्राश्वानां सम्पादने संशयितोऽपि 'यतेऽह'मित्युक्त्वा, ततो निवृत्य पर्यटन् विविधान् देशान्, विफलमनोरथोऽभूत् । अन्ते च जलाधिदेवतां वरुणं प्राप्य, भक्त्या नमस्कृत्य, सम्पूज्य, तस्मादश्वानां सहस्रमधिगतवान् । ततस्तैरश्वैः सहागत्य कान्यकुब्जम्, गाधिनरपतये तान् दर्शयामास । तदा स राजा लज्जितः, प्रभावं च तपसो बुध्वा,

हर्षाम्बुधौ ममज्ज । तदानीमेव शुभे मुहूर्ते निजतनयायाः सत्यवत्याः यथाविधि पाणिमग्राहयत्। तत्रैवावसच्च कतिपयान् वत्सरान् सत्यवतीसहितः स मुनिराट् ।

एवं स्थिते, कदाचित् भृगुरागत्य कान्यकुब्जम्, स्वतनयं ऋचीकं स्ववधूं सत्यवतीं च निरीक्ष्य, ताभ्यां प्रपूजितः सन्तुष्टोऽभवत्। सत्यवती च श्वशुरस्य सपर्याशुश्रूषणादिषु नितरामासक्ता तस्य प्रेम्णः पात्रमासीत् । तस्याः पूज्यानुरागम्, सत्याभिमानं गृहकृत्येष्वनलसत्वं शौचाचारादिसकलसल्लक्षणनिचयं च निरीक्ष्य, स भृगुः प्रमुदितस्वान्तस्तामाहूयावदत्— 'वधुः ! सत्यवति ! नितरां प्रहृष्टोऽस्मि तव सौशील्येन। अतस्तुभ्यं वरं प्रयच्छामि। वाञ्छितं वरं वृणीष्व' इति । तन्निशम्य सन्तुष्टा सा सत्यवती 'करुणानिधे! श्वशुर ! तवानुग्रहान्मम, मम जनन्याश्च पुत्रो भवतु' इति सविनयं वरं वव्रे। 'तथा भवत्वि'ति स भृगुरङ्गीकृत्याब्रवीत्— यथा 'ऋतुस्नातया त्वया, त्वज्जनन्या च क्रमेणौदुम्बराश्वत्थवृक्षयोरालिङ्गनेन स्वस्वमनोरथः सफलो भविष्यति' इति ।

गतेषु कतिपयेषु दिवसेषु ऋतुस्नाता सा च तज्जननी च भृगुणोक्तं क्रममनादृत्य, तौ तरू आलिलिङ्गतुः । तत् भृगुर्दिव्येन चक्षुषा विज्ञाय वधूमवदत्— 'ननु सत्यवति ! भवत्यौ मयोक्तक्रमविपर्ययेण तौ तरू आलिलिङ्गतुः । अतस्त्वं ब्रह्मकुलप्रपूज्यं पुत्रं प्रसोष्यसे। तथाऽपि सोऽतिदारुणेन क्षत्रभावेन ख्यातिं प्राप्स्यति । किं च त्वदीया जननी क्षत्रभावोपेतं कुमारं प्रसोष्यते । स च जन्मना क्षत्रियोऽपि ब्रह्मर्षिर्भविष्यति ।' इति । निशम्य श्वशुरवाक्यं सा वधूः सविनयं साञ्जलिः 'स्वपुत्राय क्षत्रभावो मा भूत्। स्वपौत्राय तद्भवत्वि'ति श्वशुरं प्रार्थयत् । तथेति च स भृगुरङ्गीचकार । गच्छता कालेन सा च तज्जननी च गर्भवत्यावभवताम् ।

दशमे मासि शुभे दिने प्रशस्तायां वेलायां ते उभे अपि तनयौ प्रासूयेताम्। सत्यवत्यास्तनयो जमदग्निनामा, तस्या अनुजश्च विश्वामित्राभिधेयो बभूवतुः। क्रमेण शैशवमतिचक्राम कृतबालक्रियाक-

लापयोस्तयोः ।

जमदग्निर्नवयौवनाधिरूढो राज्ञः प्रसेनजितस्तनयां रेणुकां परिणीय तया सह धर्मचारिण्या तपोवने गार्हस्थ्येन विधिना सुखमवसत् । एवं वन्येन वसतस्तस्य क्रमेण पञ्च तनया बभूवुः । तेषां पञ्चमो रामः परमेश्वरस्यांशेन सञ्जातः । स च रामो जामदग्न्यो भृगुणोकरीत्या क्षात्रं ब्राह्मं च तेजो धृत्वा निरर्गलपराक्रमो विचचार ।

---

## द्वितीयोऽध्यायः ।

### (विद्याभ्यासः)

साग्रजो रामः क्रमेणोपनीतः साङ्गान् वेदानधीत्य, धनुर्विद्यायां कृतपरिचयोऽभवत् । केन सलीलं त्रिपुरासुरान् हनवतस्त्रिलोचनात्, नान्य उपदेष्टुमर्हतीति मनसि निश्चित्य स रामो बाल्य एव पशुपतेरावासभूतं कैलासमगच्छत् । तत्र सेव्यमानं प्रमथगणैः, सहोपविष्टं पार्वत्या रत्नमये सिंहासने, भयङ्करमपि शङ्करं स्वसुताय सेनान्यै अस्त्रविद्योपदेष्टारं ददर्श । साष्टाङ्गं तं प्रणम्य विनयविनमितगात्रः स रामः 'भगवन् महादेव! महर्षेर्भृगोः पञ्चमस्तनयोऽहं रामाभिधः साष्टाङ्गं प्रणमामि । पूर्वाधिगतवानस्मि शरसन्धानचातुर्यं प्रभावेण मदीयस्य जनकस्य । अधुनाऽहं कृत्स्नास्त्रविद्योपदेशाय भवन्तं भवानीपतिं प्राप्तोऽस्मि । तन्मह्यमस्त्रविद्यां प्रयोगसंहारविभक्तमन्त्रां साङ्गामुपदिशतु भवान्' इति पुनः पुनः सप्रणामं तं प्रार्थयामास । स जगदीश्वरः क्षात्रं ब्राह्मं च तेजो दधानं तं बालं निरीक्ष्य दिव्येन चक्षुषा, तं देवांशसम्भवं च विज्ञाय, तथेत्यनुमेने । ततो महादेवोऽपि प्रत्यहं समं कुमारेण भार्गवाय तत्तदधिष्ठानदेवतोपासनपुरःसरं सप्रयोगोपसंहारं विविधमस्त्रमन्त्रजालमुपदिदेश । तावप्रमत्तौ यथोपदिष्टमस्त्रजालमुपदेशानुक्षण एव जगृहतुः । अचिरादेव तावभूतां विद्याविचक्षणौ ।

कदाचिन्नगजाधिनाथो जिज्ञासुस्तयोरन्तरं तावाहूय परस्पर-स्योपरि बाणान् विक्षेप्तुमादिदेश । तथाज्ञप्तौ शङ्करेण, तौ राम-कुमारौ परस्परस्य नैपुण्यं प्रदर्शयितुमारभेताम् । तत्तदस्त्रनैपुण्य-मधिगतवतोस्तयोरन्योन्यजिगीषां द्रष्टुकामा दिवौकसः स्वेषामनि-मिषतां प्रशशंसुः । आसत च केवलं विमानेषु विचेतना इवामृता-न्धसः ।

तयोर्हरान्तेवासिनोरन्योन्यकौशलं पश्यन्तः केचिद्दानवारयः केव-लमश्वसन् । कतिचिदन्यतरस्यापजयमाशङ्कमाना अबिभयुः । न केवलं कुमार एव रामकरविनिर्मुक्तनिशितनाराचजर्झरितहृदयोऽबि-भेत्, किन्तु अमर्त्या अप्यबिभयुः । ततस्तयो रामो निजजनकाद-धीतस्य धनुर्वेदस्य फलमद्य भवतीति मत्वा कुमारे शरवृष्टिमवर्षत् । तदा धनुर्विद्याविचक्षणः कुमारोऽपि स्वस्य वैदुष्यं प्रथयामास । तत-स्तयोः प्रवृत्तमायोधनं विलोक्य देवदानवगन्धर्वा विस्मयविषादाव-न्वभवन् । आशीविषविपन्नेगविषयाणां सायकानां मध्येमार्गं भञ्ज-नं विलोक्य रामः क्रुद्धः कुमारस्योपरि सकृदेवातिभयङ्करान् शरान् मुमोच । तानसहमानो मूर्च्छामवाप कुमारः । तदा भगवान् श-ङ्करस्तस्य भार्गवस्य समीपमागत्य, हस्तौ हस्तेन गृहीत्वा तं बहु प्र-शशंस ।

कुमारोऽपि तत्क्षणमेवाहमजागरामिति वदन् सतीर्थ्यस्य वैदु-ष्यं स्वस्य चाशक्यमिति करेणास्य करं जग्राह । तदारभ्य महादेवो रामं सुतनिर्विशेषमप्रीणात् । तदा प्रभृति स रामः 'पार्वतीप्रियपुत्र' इति प्रथामवाप । ततस्तदनुज्ञातः स रामः पितुराश्रमं जगाम ।

## तृतीयोऽध्यायः ।

### ( पितृवाक्यपरिपालनम् )

अस्ति कस्मिंश्चिद्वनोद्देशे प्रपूतः कश्चिदाश्रमः । यस्मिन् नैसर्गिकं शात्रवमधिगता अपि घातुकाः सिंहव्याघ्रादयः परस्पर-

मैत्र्या सहचरा अभवन् । तथा हि—केसरिणो राज्येऽभिषिक्ता राजान इव मत्तकरीन्द्रानारुह्य वनं परितः परिभ्रमन्तो मृगराजशब्दमर्थयुक्तमकुर्वन् । शार्दूलशावका बालमृगाश्च सहोदरा इव व्याघ्रीस्तन्यमपिबन् । आश्रमे च । नीलकण्ठा मयूराः सर्पान् कण्ठाभरणतां नीत्वा सुखं समचरन् । मण्डूकाः सर्पभोगेषु सुखं निर्भरं चाशेरत । वानरा अपि निजं गुणमुत्सृज्य शिष्या इव हस्तावलम्बनायोपयुज्यन्ते जरठतापसानाम् । तत्र याज्ञिका निरन्तरमग्नीन् जुह्वति । प्रपूतेनाज्यगन्धेन पुनन्ति स्म । छात्रा वेदानधीयते । शिष्याः केचन देवान् स्तुवते ।

एतादृशपुण्यतपोवनान्तरे भगवान् जमदग्निः कस्यचिदश्वत्थतरोर्मूल उपविश्य प्रत्यहं तपः करोति स्म । तस्य तनयाः समित्कुशफलादीनि वनान्तरादानीय पितरावतोषयन् । जमदग्नेर्जाया रेणुका जलमानेतुं मृन्मयं पात्रं शिरसि वहन्ती, नातिदूरस्थं सरोवरमयात् । जमदग्निरपि तपश्चरन्नासीत् ।

रेणुका शीतलोदकसमानयनाय यत्सरोवरमैत्, तस्मिन्नेव सरसि चित्ररथो नाम गन्धर्वराजः सावरोधः सपरिच्छदो जलक्रीडार्थमागतः । प्रत्यग्रनीलोत्पलकुमुदकल्हारपुण्डरीकमनोहरे सारसकलहंसमञ्जुकूजितसुभगे सुनिर्मले जले सावरोधः स चित्ररथः कण्ठदघ्नमवतीर्य ताभिर्नानाविधाः क्रीडा अनुभवन्नवर्तत । रूपातिशयितनलकूबरं युवानं माराभिरामं तमभिवीक्ष्य सा रेणुका निन्दितमाराऽपि मारायत्तचित्ताऽभवत् । शून्यहृदया सा तमेव ध्यायन्ती तत्रैव तस्थौ । अतिक्रान्ता च गृहगमनवेला । चित्ररथोऽपि जलकेल्यनन्तरं सपरिवारो निर्ययौ । रेणुकाऽपि विनिन्दन्ती स्वकृत्यं भीतभीतेव मन्दं मन्दं जलं वहन्ती निजाश्रमं प्रतस्थे ।

अत्रान्तरे भगवान् जमदग्निः परिसमाप्य तपः, समिदादिभिरागतान् कुमारान्निरीक्ष्य पुरः; रेणुकामपश्यन् दिव्येन चक्षुषा त-

वृत्तमवगत्य रोषकषायिताक्षः निर्दहन्निव चक्षुषा तामपश्यत् । तदनुक्षणमेव सुतानाहूयादिशत् जननीवधाय । सुषेणप्रभृतयः प्रथमे चत्वारः सुताः 'न वयमकृत्यमाचरामः' इति पितुराज्ञां प्रत्याचख्युः । 'महापातकहेतुश्चायं मातृवधरूपपित्रादेश' इति च प्रत्यवदन् । तादृशानविनीतानातिलंघितशासनान् चतुरः सुतान् निरीक्ष्य 'घोरारण्ये तिर्यग्योनिं प्राप्नुते'ति शप्त्वा स भृगुः पंचमं तनयं मातृवधे नियोजितवान् । तदा रामः शापदग्धानग्रजान्, दोषयुक्तां च मातरम्, कोपयुक्तं च पितरं विलोक्य, सम्यगालोच्य प्रथमं पितरं शमयित्वा, ततो मातरमग्रजान् रक्षणीयान् मत्वा, पितुर्निर्देशमाचरिष्णुर्मातरमवधीत् । ततः प्रशान्तः स मुनिः पितृवाक्यमकृत्यमप्याचरन्तं विनीतं बालं विलोक्य, वांछितं वरं वृणीष्वेति तनयमब्रवीत् । ततः स रामः प्राञ्जलिः प्रसन्नः पितरमवोचत्— 'यदि प्रसन्नः, मृता माता, शापदग्धा अग्रजा यथापूर्वं स्वस्था भवेयु' रिति । तदैव सर्वे स्वस्था बभूवुः । प्रकृतिमापन्नान् सर्वान् विलोक्य प्रसन्नहृदयो जमदग्निस्तस्मै साहसिकाय रामायानन्यसाधारणं भुजबलम्, अप्रतिहतां शक्तिं च ददौ । ततो रामो मातरं रेणुकां अग्रजान् सुषेणादीन् नमस्कृत्य चिरं तत्तत्परिचर्यादिभिः सुखमवसत् ।

---

## चतुर्थोऽध्यायः ।

### (तपः)

कदाचिद्रामः पितामहस्य ऋचीकस्याश्रमं गन्तुकामोऽभवत् । स्वकीयं मनोरथं पित्रोर्निवेद्य तदनुज्ञातः कतिपयैरेवाहोभिः स्वपितामहाश्रममैत् । आगतं पौत्रं विलोक्य मुदितौ सत्यवतिऋचीकौ तं शिरस्युपाघ्रायाश्लिष्य रेणुकाजमदग्न्योः पौत्राणां च कुशलमापृच्छ्य परममोदेताम् ।

कतिपयादिवसापगमे च ऋचीकः पौत्रमाहूय 'तनय, हितं वचनमुपदिशामि अवहितः शृणु । कारुणिकं भगवन्तं देवदेवं उद्दिश्य हिमालये तपः कुरु । देवता यज । जहि कामादीनन्तर्गतान्

शत्रून् । प्रसन्नो देवदेवस्तुभ्यं दास्यति दिव्यान्यस्त्राणि । आप्त-दिव्यास्त्रो देवानां मनोरथान् पूरय' इति हितमुपदिश्य, तं तपश्च-रणाय हिमाद्रिमनयत् ।

तत्र हिमाद्रौ स भार्गवो रामः कृताश्रमः जितेन्द्रियो विगता-शनो मूलाशी मासमेकम्, जलाशी मासमेकं तपश्चरन् क्रमात्तदपि जलपानमत्यजत् । ज्वलन् तपोमयेन तेजसा सकलकल्याणगुणगणा-लंकृतो मनसि महादेवं प्रतिष्ठाप्य, निरन्तरं ध्याननिमीलितलोचनो ऽभवत् । क्रमादुग्रं तपः कर्तुमारेभे । ग्रीष्मर्तौ पञ्चाग्निमध्ये, वर्षास्वनिकेतनो बहिरवस्थितः, हेमन्ते शिशिरे चाकण्ठं जले नि-मग्नः तपश्चकार । एवं सततमात्मानमात्मन्येव पश्यन् निवर्ति-तबाह्येन्द्रियव्यापारः स्वनियममन्वातिष्ठत् । तस्य तादृशीं तपःप्र-वृत्तिं कर्णाकर्णिकया श्रावंश्रावं मुनयः क्रतुजाबालिमृकण्डुप्रभृतय-स्तत्तपोवनमागत्य, तथाविधं भार्गवं विलोक्य विस्मयाकृष्टचेत-स आसन् ।

विज्ञाय चारैस्तस्योग्रं तपः, परात्परो महादेवः परीक्षितुं कैरा-तं वेषं स्वीकृत्येतस्ततश्चरन् तस्याश्रमपदं प्रविवेश । अपश्यच्च तं भार्गवं मुनिम्, अगर्जच्च प्रलयजलदगम्भीरेण स्वरेण 'अयि सा-धो, दोषप्रवरनामाऽहं व्याधः । स्वेच्छया वृत्त्याऽहमस्मिन्नेव कानने स्वैरं चरामि । शासिताऽहमेतस्य वनस्य । यमधीने चात्र कृत्या-कृत्ये । अन्तरा च मदीयामाज्ञामेतद्वनं प्रवेष्टुं नार्हन्ति शतमन्युप्र-मुखा अपि देवाः । किमुतान्ये त्वादृशाः क्षुद्राः । कुत आयातो भवान्? निवेदय सर्वमुदन्तमाशु' इति । श्रुत्वा च तदीयं वाक्यं, दृष्ट्वा च भयानकं रूपम्, सञ्जातविस्मयः स भार्गवः स्वीयमुद-न्तजातमावेद्य, न तेन सहावस्थानं शुभोदर्कं भवतीति मत्वा, विहा-याश्रमपदमन्यत्र गन्तव्यमिति सविनयमभ्यधात् । श्रुत्वैतत् स व्याधः कुपितस्तमुवाच— 'अयि साधो, यदि नेच्छसि मयासम-मत्र, झटिति गच्छ त्वमेव ।' इति । ततः स भार्गवः क्रुद्धः प्रत्यु-वाच— 'न भवन्ति पूजार्हा व्याधाः । यतो निर्दयं प्राणिनस्ते घ्न-न्ति । उद्घोषयन्ति च शास्त्राणि 'अहिंसा परमो धर्मः' इति ।

भवांश्च पुनर्निर्हेतुकमेव प्राणिनो हन्ति स्वोदरपूरणाय । तद्गच्छान्यतः । अथ वा अहमेव गच्छामि' । इत्युक्त्वा गन्तुमुदचलत् स मुनिः ।

तदा परमेश्वरस्तं निरुद्ध्य 'भवत्वहमेव गच्छामि । किन्तु भवानत्यर्थं तपश्चरति महादेवमुद्दिश्य । यः स महादेवः प्रत्यहं भिक्षां करोति । श्मशाने वसति च । कथमादिभिक्षुः पितृसद्मगोचरः स देवस्त्वदीयं मनोरथं सफलयिष्यति । किं चोभावपि समानावेव । स देवो ब्रह्माणं हत्वा ब्रह्महत्यासमन्वितोऽभवत् । त्वं पुनर्मातरं हतवानसि । अतस्त्वदीयस्य मनोरथस्य तादृश एव फलप्रदाता भवत्येव । अतस्त्वं मातृवधजनितपापमपनेतुं यतस्व निवर्तस्व तपसः । वृथा कायक्लेशेनालम्' इत्युवाच । तच्छ्रुत्वा स भार्गवः 'न केवलं व्याधोऽयं किन्तु परमेश्वर एवैतादृशं रूपं गृहीत्वाऽऽत्मानं परीक्षितुमागत' इति निश्चित्य निजापराधक्षमार्थं पुनः पुनः प्रार्थयामास । कृपालुः स भगवान् स्वस्य निजं रूपं प्रदर्श्य, तस्मै परशुं दत्वाऽनुजग्राह । परिभ्रम तीर्थानि । शुश्रूषस्व गुरून् । इत्येवमादिश्य तिरोदधे ।

स रामः परमेश्वराज्ञानुसारेण संचरमाणोऽवर्तत । अत्रान्तरे दानवाः शुक्रचोदिताः स्वर्गपुरीमभितः समाक्रामन् । अतर्कितोपनतं तदाक्रमणमभिवीक्ष्य, महेन्द्रः किंकर्तव्यतामूढः सुरगुरुणा समालोच्य, सपरिच्छदः परमेश्वरं पुनः स्वपदप्राप्तये प्रार्थयन्नासीत् । दीनावनबद्धादरो भगवान्निशम्य दीनालापान्, कारुणिकः महोदरमाहूय हिमवतो दक्षिणे भागे तपश्चरन्तं भार्गवमानेतु समादिदेश । तदा सोऽपि तदीयामाज्ञां शिरसि वहन् तं भार्गवं महादेवमनयत् । सोऽपि भार्गवमादिदेश स्वर्गाक्रमिणां दानवानां समूलनाशाय । शिरसि निधाय महादेवाज्ञां सहितः सुराणामधिपेन सुरैश्च गत्वा त्रिदिवम्, समाह्वयत दानवानायोधनाय स भार्गवः । कृत्वा च पराजितान् दानवान् युद्धे, अभिषेच्य पुनः शतमन्युं स्वाराज्ये, पुनरवाप्य हिमालयं महादेवस्याशीःपात्रमभवत् । देवदेवः प्रसन्नो भूत्वा निजं रूपं प्रदर्श्य, तं बहुधा प्रशस्य, तस्मै ददावनेकानि दिव्यास्त्राणि ।

अधिगतदिव्यास्त्रः स भार्गवः पितरौ द्रष्टुकामः, प्रतिनिवृत्य हिमालयात्, गच्छन् मध्येमार्गं कस्मिंश्चिद्विप्रबालके हठान्निपतन्तं व्याघ्रमालोक्य, सञ्जातदयो बाणेनैकेन तमहन् । तदनुक्षणमेव व्याघ्रः शरीरमुत्सृज्य, दिव्यं गान्धर्वं रूपं धृत्वा तं भार्गवमस्तौषीत्। अकथयच्चात्मनः शापवृत्तान्तम् । तदनुमत्या स गन्धर्वः निजावासमगच्छत् । तं च विप्रबालकं सदयमुद्धृत्य स भार्गवरामोऽव्रणं कृत्वा तेन सह स्वपितामहस्य ऋचीकस्याश्रमपदमगात् । अनयच्च तौ पुराणदम्पती सत्यवतिऋचीकौ तयोराशीर्वचनानामभवच्च पात्रं स रामः ।

---

## पंचमोऽध्यायः ।

### (कार्तवीर्यः ।)

पुरा ब्रह्ममानसपुत्रो नारदः कदाचिद्वैकुण्ठं गत्वा, तत्र विराजमानं सुदर्शनमवलोक्यैवमपृच्छत्— 'भो चक्रराज! संशय्य किमपि प्रष्टुकामोऽस्मि । कृपया मदीयं संशयं छिन्धि । क्रूरान् निशाचरान् देवा रणाङ्गणे तावकेन बलेन वा घ्नन्ति ? शौरेरसाधारणभुजबलेन वा ?' इति । तदाकर्ण्य स चक्रराजः 'मदीयेन भुजपराक्रमेणैव निहन्यन्ते देवारयः । न तत्र शौरिर्वा, तस्य भुजबलं वा कारणम्' इति प्रत्युवाच । ततः कामचारो नारदो गत्वाऽन्तिकं महाविष्णोः, सभक्तिकं प्रणम्य, कृताञ्जलिर्भगवन्तमवदत्— 'भो दयानिधे! भगवन्! निर्जिता बहवो दानवा रणाजिरे । तत्र तावकं भुजबलमाहोस्वित् सुदर्शनस्य वेति संशयितोऽस्मि । कृपया संशयमपनुदतु भवानि'ति । श्रुत्वैतत् भगवान् सञ्जातकरुणः स हरिः 'न तत्र चक्रं कारणम् । मामकेनैव भुजबलेन जिता दानवाः' इति प्रत्यवदत् । ततः 'एवमेव सुदर्शनोऽप्यवदत् । भवताऽप्येवमेवोक्तम् । तत्र याथार्थ्यं ज्ञातुमिच्छामी'ति पुनः पुनः सविनयमभ्यर्थ्यमानो नारदेन प्रत्युवाच स मुरारिः— 'यदि जातसंशयो भवान्, सहतां कञ्चित् कालं; प्रदर्शयिष्यामि चक्रस्य मम च पराक्रमं भूलोके । तदा ज्ञास्यति भवानेवोभयोरन्तरम्' इति ।

ततः स भगवान् सुदर्शनमाहूयादिदेश तद्यत् कर्तव्यम् । तदाज्ञानुपदमेव स चक्रराजो धरातले माहिष्मतीपुराधीश्वरस्य कृतवीर्यस्य पुत्रो भूत्वा स्वयं सहस्रारतया सहस्रबाहुर्बभूव । स कार्तवीर्योऽतिक्रान्तशैशवस्तपःसमाराधितदत्तात्रेयदत्ताणिमाद्यष्टैश्वर्यसम्पन्नः कृतप्रतिष्ठो बभूव । पर्यपालयच्चतुरर्णवोपेतामिलां धर्मेण । विधिनेष्टवांश्च विविधैर्यज्ञैः । अन्वरञ्जयच्च प्रजाः स्वप्रजा इव ।

गच्छता कालेन स राजा सावरोधो नर्मदां प्रविश्य, सहस्रैर्बाहुभिर्जलमवरुध्य, कुर्वन् जलक्रीडामासीत् । समयेऽस्मिन् रावणो दिग्विजययात्रायै प्रस्थाय, नियमाय नर्मदां प्राप्य, कृतावगाहः सैकतं लिङ्गं पूजयन् तत्र उपाविशत् । निम्नेतरं प्रवहता जलेन पीड्यमानस्तत्र कारणमन्विष्यन् कार्तवीर्यकृतं जलावरोधं चारैर्विदित्वा तं समरायाह्वयत । पराजितस्तेन कार्तवीर्येण स रावणः कारायामबध्यत । तथाविधोऽपि रावणः पुलस्त्यप्रार्थनयाऽत्यज्यत ।

कदाचिद्दहनः कार्तवीर्यान्तिकं विप्रवेषेण गत्वा क्षुधितोऽहम्, मदीयक्षुन्निवृत्तये स्वाभिमतान्नं देहीति ययाचे । यथाऽभिलषितं प्राप्तवरः स विप्ररूपोऽनलः, तस्मै राज्ञे स्वीयमुदन्तं सर्वं निवेदयामास । अथ हव्यवाहनः तदाज्ञया पुराणि वनानि च दहन् जातुचित् वसिष्ठाश्रममपि दग्धुमारभत । तेन प्रकुपितो वसिष्ठः कार्तवीर्यं तद्रक्षकं विज्ञाय निर्निमित्तं तपोधनोपद्रवकारिणं तं शशाप । शापदग्धः स कार्तवीर्यो भार्गवरामात् पराभवमाशंकमानस्तूष्णीं बभूव ।

---

## षष्ठोऽध्यायः ।

अथैकदा हैहयः कार्तवीर्यः सहितः परिवारेण मृगयाविनोदाय प्राविशदरण्यम् । तत्र विविधान् मृगान् हत्वा मध्याह्नार्कमरीचिभिः श्रान्तावयवः क्षुत्तृषाभ्यां पीड्यमानः सह परिवारेण नर्मदामवगाह्य, पीतजलो गच्छन् मार्गमध्ये ददर्श कस्यचिन्महर्षेराश्रमम् । प्रविश्य तमाश्रमं पश्यन् समन्तादभिमुखागतं सशिष्यं मुनिवरमपश्यत् । यो जमदग्निनाम्ना प्रसिद्धिं गतः । मुनिप्राग्रस्तं चक्रवर्ति-

नं हैहयं विदित्वा सबहुमानं कुशलानुयोगपुरस्सरं गोष्ठीभिश्च समं परिवारेण तमाश्रममनयत् । अवदच्च सविनयं 'भो महीपाल भवदागमनेन नितरां तुष्टोऽस्मि । कञ्चित्कालमत्रैव विश्रम्य परिवारयुतः मदीयमातिथ्यं स्वीकृत्य, ततो गमिष्यसि' इति । नृपोऽपि मुनिवाक्यमङ्गीकृत्य तस्थौ । मुनिरपि सस्मार मनसि कामधेनुम् । साऽपि तदाज्ञानुपदमेव सपरिच्छदाय राज्ञे यथाकामं मृष्टान्नं सर्वभक्ष्योपेतं पर्यवेषयत् । तृप्तिं गताश्च सर्वे राजसेवकाः । राजा च हर्षविस्मयावनुभवन् तपःप्रभावं शंसन्, तदनुज्ञातः स्वपुरमभिप्रतस्थे । प्रविश्य च पुरीं स्मरन् कामधेनोरद्भुतप्रभावम्, मुनिवरस्य चामानुषं तपःप्रभावम् ध्यायंध्यायं तादृशमहामहिमान्वितां तां कामधेनुं देहीति मुनिवरं सम्प्रार्थ्य वा, तदनिच्छया वा तामानेतुमभिलषन्, तन्मनोरथप्राप्त्युपायं मनसि पर्यालोचयत् ।

सचिवोऽपि तदीयं तादृशदिव्यमहिमानं तस्य मुनिवरस्य तपःप्रभावं च पुनः पुनर्वर्णयामास । प्रार्थयच्च तां कामधेनुं नेतुम् । हैहयस्य स मनोरथांकुरः सिक्तः सचिवोक्तवारिणा पल्लवितोऽभवत् । पुरोधास्तु तदतीवानुचितमिति, ब्रह्मस्वहरणं महापातकावहमिति च नृपमबोधयत् । अदर्शयच्च प्रमाणं तत्र—

'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥' इति ।

'तस्मान्निवर्तस्वानर्थमूलादस्मादुद्यमात्' इति वारं वारमबोधयत् । परं तु कार्तवीर्यः पुरोधसोक्तमनादृत्य 'बुद्धिः कर्मानुसारिणी'ति न्यायात् भाविविनाशहेतुकामधेनुग्रहणाभिनिवेशः सचिवमाज्ञापयामास । ततः सचिवस्तदाज्ञया तां धेनुमानेतुकामो निर्गत्य पुरात्, ससैन्यो मुनेराश्रममयासीत् । विलोक्य च मुनिं प्रणम्य कृताञ्जलिरवोचत् 'भो मुनिनाथ! भवदन्तिके स्थिता कामधेनुर्भूमण्डले सर्वधेनुवरिष्ठा विराजते । सोऽहं हैहयाज्ञया तां दिव्यानुभावां याचमानस्तवान्तिकमुपागतोऽस्मि । सहस्रामोघधेनुविनिमयेन तां दत्वा चक्रवर्तिनो मनोरथपरिपूरणेन मदीयागमनं सफलं कुरु' इति । निशम्यैतत् जमदग्निरवदत्— 'भो सचिवाग्रेसर, धेनुरियं दिव्या

कामदुघा। मत्कृतहोमानुकूला; अतो न प्रदेयेयं सहस्रधेनुशुल्केनापि’ इति । तदाकर्ण्य मुनिवाक्यं तं मुहुर्मुहुः प्रार्थयत्। यदा निष्फला चाभवत् तस्य प्रार्थना , तदैव कालचोदितः सैनिकानादिदेश बलात्तां ग्रहीतुम् ; उपरुन्धन्तं च तं मुनिं संहर्तुम् । उपरुरोध च स मुनिस्तां धेनुं बलादाकृष्यमाणां सैनिकैः । तदा सैनिकाः कोपपरीतास्तां हठात् गृहीत्वा, रज्जुभिर्दृढं बध्वा, कशाघातैस्तां सन्ताड्य, तं मुनिं निघ्नन्ति स्म। ततस्ते निरातङ्कास्तां सुरभिं पुरं नयन्ति स्म ।

तथा नीयमाना सा सुरभिः ‘विलोक्य विगतासुं मुनिम् , कोपानलज्वालाज्वलितचक्षुषा निर्दहन्तीव तान् विलोकयन्ती स्वकीयशरीरान्दोलनेन छिन्नपाशबन्धा विषाणविधूननेन, निशितखुराग्रताडनेन, पुच्छाग्रप्रहरणेन च तान् परितो निघ्नती, निमिषतां च सैनिकानाम् , सह वत्सेन तिरोदधे । ततः किंकर्तव्यतामूढो हतशेषैः सैनिकैः सह लज्जावनतवदनोऽमात्यः प्राप्य कार्तवीर्यं नमस्कृत्य सर्वमुदन्तमकथयत् ।

---

## सप्तमोऽध्यायः ॥

### (भार्गवस्य प्रतिज्ञा ।)

श्रुत्वैवं कार्तवीर्यो जमदग्निं विगतासुं कामधेनोरदृश्यतां च सैनिकेभ्यः, निनिन्द नितरामात्मानम् । ‘लोभाकृष्टेनाकृत्यमाचरितं मया । येनाहं ब्रह्महत्यां, सुरभिपीडनं च मोहेनाकारयम् । कथं वाऽऽत्मानं तारयामि ब्रह्महत्यायाः । किं करोमि मन्दभाग्यः’ इत्येवं बहु निन्दन् आत्मानं तन्निवारणोपायमन्वेष्टुमारभत ।

तपोवनान्तरादागत्य रेणुका तथाविधं भूमौ पतितं व्यसुं निजपतिं समालोक्य विचेतना छिन्नमूला लतेव पपात ।

यदा सा रेणुका प्रत्यबुध्यत तदा भार्गवोऽपि वनान्तरादागतः विगतासुं पितरं विलोक्य, प्रस्फुरिताधरो दिव्येन चक्षुषा सर्वमुदन्तमवगत्य, पितुस्तस्योपरि निपत्य विलपन्त्या मातुरुरस्ताडनानामेकविंशतिं निरीक्ष्यैवं प्रतिज्ञामकरोत् । ‘अयि जननि, शृणु

मम प्रतिज्ञां, जहीहि शोकम् । एवंविधपापकारिणां मदोन्मत्तानां क्षत्रियाणां संहारं यावदुरस्ताडनम्, तावत्संख्यया चरिष्यामि ।' इति ।

ततः स रामः सहितो भ्रातृभिः पितुरौर्ध्वदेहिकं कर्म दहनादि कर्तुमारभत। यदा ते पितुर्भौतिकं देहं दहनायोपानिन्युरनलम्, तदैवाशरीरिणी वाणी भर्त्रा सह सह गमनाय कृतोद्यमां रेणुकामुद्दिश्यावदत्— 'ननु पतिव्रते रेणुके, मा कुरु साहसम् । प्रतीक्षस्व कञ्चित्कालम् । पुनस्त्वद्भर्ता जीविष्यति । अतस्तदीयं भौतिकं देहमप्रमत्ता परिपालये'ति । निशम्यैतां दिव्यां वाणीं ते सर्वे प्रहृष्टाः पुनः पितुः शरीरमाश्रममनयन् ।

अतिक्रान्ते च मुहूर्ते काले दिष्ट्या भगवान् भृगुस्तं प्रदेशमयासीत् । आगत्य च मृतसञ्जीविन्या विद्यया मृतं पौत्रमुज्जीवयामास। निद्राप्रबुद्धमिव प्रबुद्धं तं सचेतनमुद्वीक्ष्य, रेणुका, तत्पुत्राः तत्रत्या ऋषयश्च सन्तोषस्य परां कोटिमारूढाः। ते भृगुं सविनयं प्रदक्षिणीकृत्य साष्टाङ्गं प्रणम्य, विधिवदर्घ्यपाद्यादिसपर्यया पर्यपूजयन्। भृगुस्तेभ्यः कार्तवीर्यो वसिष्ठस्य शापेनेत्थमकरोदिति, भार्गवरामकृता प्रतिज्ञा सफला भविष्यतीति चोक्त्वा प्रयुज्याशिषस्तिरोदधे।

---

## अष्टमोऽध्यायः।

### (परशुप्राप्तिः)

यदा यदा मदान्धीकृतचेतसा मूढेन कार्तवीर्येण पितर्याचरितमकृत्यमस्मरत् तदा तदा कोपाग्निरदहत् तं भार्गवं रामम् । ततो दूयमानमानसः स भार्गवः पितुः सकाशं गत्वात्माभिलषितं व्यजिज्ञपत् । श्रुत्वा च स तपोधनः शान्तात्मा पुत्रमेवमुपदिदेश— 'वत्स, परशुराम, शृणु मदीयं वाक्यम् । मुनयो हि क्षमैकधनाः । महापराधिनेऽपि परस्मै न कुर्वन्त्यपकारं मनसाऽपि किमुत प्रहरणैः । स हि साधुजनः, यो हि ताड्यमानोऽपि आयुधैः, उच्यमानोऽप्यवाच्यवचनानि न क्षुभ्यति, तस्यैव सर्वसम्पदः करस्था भवन्ति।

अतः क्षमामेवावलम्ब्य मनसाऽपि तस्यापकृतिं मा समाचर'—इत्येवमादिकं पितृवाक्यमाकर्ण्य स भार्गवः पितरमुवाच—'युक्तमुक्तं भवद्भिः । किन्तु दुष्टा न शिक्षामन्तरेण शाम्यन्ति । पश्य, लोकेऽवश्यं ते दण्डनीयाः । अतस्ते नोपेक्ष्या भवन्ति । तस्मादनुज्ञां देहि' इति । एवमङ्गीकृतप्रार्थनः स रामः दिग्विजयाय प्रस्थातुकामः प्रथमं सत्यलोकं गत्वा तत्र रत्नासने बद्धपद्मासनासीनाय लोकपितामहाय कृतनमस्कृतिरस्तौषीत् ।

ततः प्रसन्नः परात् परः 'भोः पुत्रक, परशुधर, न युक्तमिदं यद्भवतस्तथाविधममानुषाचरणीयं प्रतिज्ञावचनम् । पाहि सृष्टमिदं जगत् । तत्रैकस्यापराधेन सर्वस्यापि राजन्यलोकस्य संहरणमनुचितम् । तथाऽपि जगती दुर्जननरपालावकीर्णा दृश्यते । तत् त्वया सम्यगेव प्रतिज्ञातम् । अत इतः प्राप्य महादेवस्य सदनं तस्मादधिगताखिलदिव्यास्त्रो जयतु भवानि'त्येवमादिदेश ।

तदनु स भार्गवो जगत्पितरावभिवन्द्य पार्वतीपरमेश्वरौ, विज्ञापितप्रतिज्ञावृत्तान्तः नारायणाग्नेयादिदिव्यास्त्राणि, शक्तिशूलगदादण्डादिप्रहरणोपयुक्तायुधानि च प्रसन्नादधिगतवान् महादेवात् । ततस्तदनुमत्या पौष्करे तीर्थे तत्तदधिगतानां दिव्यास्त्रमन्त्राणां सिद्धये शतं वत्सराणां तपसोग्रेण व्यनीयत । अथ जातुचित् स्नानार्थं पुष्करं गत्वा प्रतिनिवृत्तेन तेन मध्ये मार्गे निहन्यमानमृगमिथुनो व्याधो व्यलोकि । सोऽपि मृगयुरागच्छन्तं सच्छात्रं भार्गवं विलोक्य भयकम्पितसर्वाङ्गः किंकर्तव्यतामूढ उटजव्यवधानमात्मानं कृत्वा तस्थौ । निर्भयं चरतोर्मृगयोर्मृगी रामं प्रेक्ष्य, मृगं प्रोवाच—

'नाथ, पश्य रामम् । यावदयं तप आचरिष्यति तावत् सुखं स्थास्याव आवामस्मिन् वनप्रदेशे' इति । ततो मृगः 'जानाम्यहं भार्गवं रामम् । पुरा यमस्य शिष्यो व्याघ्रात् संरक्षितोऽभवत् । ततोऽयमकृतव्रण इति प्रसिद्धिं गतः । तपस्सन्तुष्टादीश्वरादयं भार्गवोऽमोघं कवचं श्रीकृष्णनामकम् , पाशुपतादिदिव्यास्त्राणि च प्राप । परं तु सिद्धिं न प्राप्तवान् शतेनापि वत्सराणां तपसा । तत्र कारणं

वदामि शृणु । भक्तेरुत्तममध्यमाधमभेदेन त्रिविधा । नाध्यारोहद‍यं भक्तेरुत्तमां श्रेणिम् । अगस्त्य एव तादृशोत्तमभक्तेरुपदेशायालम् । तस्योपदेशमन्तरेणायं भार्गवः कवचस्य सिद्धिं न प्राप्नोति । तदुपदेशानुपदमेव सिद्धिमान् भविष्यति ' इति मृगीमुवाच । तन्निशम्य मृगभाषणं सद्यो रामः अगस्त्याश्रमं प्रवेष्टुमना बभूव ।

यदा शिष्येणागस्त्याश्रमं प्रतस्थे, तदैव निकुञ्जान्तर्गतं व्याघ्रं कोऽपि केसरी निहत्य तन्मृगमिथुनं ररक्ष । प्रस्थितं भार्गवमनुवव्राज मृगमिथुनम् । कतिपयैरेवाहोभिः प्रविवेश मृगानुयायी भार्गवो मुनेराश्रमम् । अगस्त्योऽपि कृतनमस्कृतो भार्गवेण, कुशलानुयोगपुरःसरमागमनप्रयोजनमपृच्छत् भार्गवम् । व्यजिज्ञपच्च रामः स्वकीयमुदन्तम् । प्रार्थयच्च भूयो भूयः श्रीकृष्णनामकवचोपदेशाय तं मुनिमगस्त्यम् । ततः प्रसन्नः स मुनिरुपदिदेश यथाविधि तन्मन्त्रराजम् । स भार्गवस्तदुपादिष्टमार्गेण जपन् मन्त्रराजम् कवचस्य सिद्धिमभिलपन्नासीत् । तन्मृगमिथुनं च मृगरूपमपहाय दिव्यलोकमवाप ।

ततः साक्षात्कृतो भगवान् विष्णुः प्रसन्नो भूत्वा बहुधा संस्तूयमानः कवचस्य प्राशस्त्यम्, स्वाभीष्टसिद्धिं च कथयित्वा 'मदीयेनांशेन जगद्द्रुहां राज्ञां विनाशमाचर । पुनस्त्रेतायां दाशरथिर्भूत्वा स्वीयमंशं ग्रहीष्यामि' इत्युपादिश्य तिरोदधे ।

---

## नवमोऽध्यायः ।

### (कार्तवीर्यविजयः दिग्विजयश्च)

एवमधिगताखिलास्त्रसिद्धिर्देदीप्यमानदिव्यतेजा भार्गवो रामः सशिष्यो गच्छन् नर्मदायां कृतावगाहो निर्वर्तितदैनन्दिनकर्मकलापस्तत्रैव कृतनिकेतनः प्राहिणोत् दूतमेकं कार्तवीर्यान्तिकम् । सोऽपि दूतः सत्वरं गत्वैवमवोचत्— 'रे दुरात्मन् , भार्गवो राम एवमावेदयति । निष्कारणपितृहन्तारं मदान्धं हन्तुकामः सहसा युद्धा-

यागामिष्यति । अतः संसिद्धो भव' इति । तदा कार्तवीर्योऽप्यविदितन्माहिमाऽपि विमूढात्मतया केवलं विनिन्दन् युद्धसन्नद्धा भवतेति सैनिकानादिशत् । तदाज्ञां शिरसि वहन्तः सर्वे सामन्ताः सह सैन्यैः समाजग्मुः ।

ततः स्वयमरिजनभयङ्करं रथमारुह्य सह सेनया सागरसमया विविधैरायुधैः कार्तवीर्यस्तस्यैव भार्गवस्याश्रमं नर्मदातीरस्थमभिप्रतस्थे । अपश्यच्च बहूनि दुर्निमित्तानि । तथा हि—विकीर्णकेशपाशा नीलाम्बरधरा विगतास्या कापि नारी दृग्गोचराऽभवत् । तां विकृताकृतिं विलोक्य कालरूपामागतां मन्वानो विगतोत्साहः कथंचित् धैर्यमवलम्ब्य जगाम तदाश्रमम् ।

दृष्टमात्र एव स रामः सैनिकैरहन्यत । ततः स कोपानलज्वालाज्वलिताङ्गः परशुना सैन्यतरून् समूलनाशं निघ्नन् प्रलयकाल इवारिभयङ्करो विचचार रणाङ्गणे । दुःसहं तं भार्गवं निरीक्ष्य हतावशिष्टाः 'जीवन् भद्राणि पश्यति' इति न्यायमनुसृत्य पलायिताः । मत्स्याधिपस्तु सर्वशास्त्रकुशलतया निर्भयं तस्थौ । तदा रामोऽस्य ध्वजमेकेन सायकेन, चतुर्भी रथाश्वान् , द्वाभ्यां शरासनं शरं चैकेन बाणेन कृतहस्ततया चिच्छेद । अच्छिनच्चैकेन शरेण तस्य शिरः । कालाग्निभीकरं तं विलोकयितुमप्यशक्तास्तस्य हतावशेषा सैनिकाः पलायांबभूवुः । चारैस्तदवगम्य स राजा बृहद्बलसोमदत्तौ प्रैरयत् । तावतिवेलया सेनया समं रामेण योद्धुमारभेताम् । द्विगुणीकृताग्रहो रामः पिनाकपाणिरिवाप्रतिहतपराक्रमो रणाङ्गणे परस्परजयकांक्षतया बृहद्बलप्रयुक्तं नागास्त्रं गारुडेन छित्वा सोमदत्तप्रहितं माहेश्वरं शूलं मार्ग एव छित्वा तौ पञ्चत्वमगमयत् । अगर्जच्च सिंह इव । एवमक्षौहिणीनां विंशतिं कदलीतरूनिव सलीलं हत्वा, शौर्येणावार्येण विराजमानो विचचार ।

ततः स राजा सप्ताक्षौहिणीसेनासमेतं सुचन्द्रं नाम राजानं प्रेषयामास । सोऽप्यागत्य स्मेरमुखं परशुधरं रामं निरीक्ष्य तस्योपरि शरवर्षमवर्षत् । तदा मनसा ध्यायन् शङ्करं स रामः सस्यानि लवित्रेणेव सैनिकानामूलं पातयन् प्रेक्षकानतोषयत् । ततस्तौ

बाहूबाहवि द्वन्द्वेन युद्धेन जयमलभमानौ शस्त्राशस्त्रि युद्धमारभेताम्। तदनु रामोऽभिमन्त्र्य नारायणास्त्रं मुमोच। तदस्त्रमभिवीक्ष्य सुचन्द्रः कर्तव्याभावेन स्यन्दनादवरुह्य, कृताञ्जलिःस्तुवन् प्रणनाम। तदप्यस्त्रं प्रणमन्तं तमपहाय पुनःप्रपेदे प्रयोक्तारम्। ततो रथमारुरोह यथापूर्वं सुचन्द्रः। तदनु विस्मितान्तरङ्गः स रामो गदातोमरायुधैर्जघान सुचन्द्रम्। क्रुद्धः स राजा शूलमधिचिक्षेप। तच्च शूलं स्रगिव रामस्य कण्ठमलंचकार।

अत्रान्तरे स रामः प्रत्यक्षमागतां भयङ्करास्यां त्रिशूलधारिणीमधिरूढसिंहां भद्रकालीं विलोक्य, सप्रणामं प्रदक्षिणीकृत्य स्तौति स्म सूक्तैर्वेदमयैः। ततः प्रसन्नानना सा काली सुचन्द्रस्य वधोपायमुपदिश्य तिरोदधे। तदनुक्षणमेव यथादिष्टमाग्नेयास्त्रं प्रायुंक्त स रामः। तेनास्त्रेण भस्मसात्कृतः सुचन्द्रः।

अथ पितरं परासुं विलोक्य सुचन्द्रतनयः पुष्कराक्षाभिधः कोपपरीतः सेनावाहिन्या तं रामं रुरोध। अवर्षच्च नाराचान्। तान्निरर्थकान् विदित्वा वारुणास्त्रं मुमोच। तच्चास्त्रं वारिधाराभिर्निरन्तरमभिवर्षदपि रामप्रेषितवायव्यास्त्रेण पराजितमभवत्। ततो रामः परशुना सैनिकान् समूलघातं निहत्य पुष्कराक्षं पंचत्वमगमयत्।

एवं कार्तवीर्यो दैवोपहतमात्मानं जयलक्ष्मीसनाथं रामं चाभिवीक्ष्य कथंकथंचिद्धैर्यमवलम्ब्य, स्वयं रामेण योद्धुमारभत। तदा दिवौकसः सर्वे तयोरन्योन्यजयाभिलाषिणोः शरनैपुण्यविलोकनव्यग्रमनसो विमानारूढा नभसि संचेरुः। तदा स राजा निजैः सहस्रेण बाहुभिः शरान् शरासनेषु संयोज्यैकदैव राममभ्यवर्षत्। मार्गमध्ये एव तान् चिच्छेद रामः।

सृष्टिस्थितिप्रलयकर्तृत्वमात्मनः संच्छाद्य स रामः प्राकृत इव धनुषि शरं सन्धाय कार्तवीर्यस्य कर्णौ चिच्छेद। विहीनः कर्णाभ्यां स राजा प्रगततेजसमात्मानं मन्वानः क्षणं तूष्णीं तस्थौ।

अचिन्तयच्चात्मनि 'पुरा यथा रावणं सहेलमजयम्, तथैव राममपि कृतान्तातिथिं कुर्यामिति सगर्वमासम् । इदानीमपगतस्तादृशावलेपः । भवितव्यं भवत्येव । नात्र संशयः । तथाऽप्याकण्ठगतप्राणः यथाशक्ति प्रदर्शयाम्यात्मनः पौरुष'मिति । एवमादि तत्कालोचितं विचिन्त्य, मनसा दत्तात्रेयं कुलदैवतमस्मरत् । नोपगतश्च प्रत्यक्षतां स देवो यथापुरम् । तत्कारणमन्वेषयन्तं तं राजानं दैवोपहतकं रामः प्रोवाच—'भोः पातकिन्, पुरा निर्हेतुकं त्वया कृतस्य जमदग्निपराभवस्य फलमद्यानुभोक्ष्यते । क्षत्रियः सन् भीरुरिव किं पलायसे । एह्येहि । संसिद्धो भव । ' इति । तदा काल इव ज्वलन् प्रकुपितो युद्धोन्मुखो भूत्वा प्रचण्डविक्रमेण शूलचक्रशक्तिगदाद्यायुधजालं खण्डितमालोक्य गुरुदत्तेन शूलेन तं जघान । तथाऽभिहतो रामो मूर्च्छामवाप । अपतच्च भूमौ । तन्निरीक्ष्य सहसैवोद्विग्नमानसा दिवौकसो दिवोवतीर्य भृशं शुशुचुः । तदा भक्तिवशंवदः शङ्करः कृपया रामान्तिकं परैरलक्षितः सन्नागत्य मृतसञ्जीविन्या विद्यया तं सचेतनमकारयत् ।

ततः प्राप्तचेतनः स जामदग्न्यो दण्डताडितोरग इव प्रकुपितस्तपसा वशंवदं श्रीकृष्णकवचं समन्त्रकमभिमन्त्र्य धनुषि सन्धाय मुमोच । तेन दिव्यास्त्रेण निकृत्तशिराः छिन्नमूलो महातरुरिव भूमौ पपात स कार्तवीर्यः । विगतासुं पितरं निरीक्ष्य कार्तवीर्यसुता अपि रामकोपानले शलभतां गताः । चक्रांशेन जातस्य तस्यात्मा भगवदंशसम्भूतं भार्गवं रामं प्रविश्यान्तर्हितोऽभवत् । तदा ववर्षुः पुष्पवृष्टिं दिवौकसः । ननृतुश्चाप्सरसः । नेदुर्देवदुन्दुभयः ।

एवं जयलक्ष्मीसनाथो रामो जामदग्न्यः सह शिष्येणाकृतव्रणेन परमेश्वरस्य स्वविजयोदन्तं कथयितुं कैलासं जगाम ।

---

## दशमोऽध्यायः ।

(एकदन्तः)

तत्र कैलासे समन्तात् प्रमथगणैः परिपालिते, पार्वतीपरमेश्वरयोः सन्दर्शनव्यग्रमानसो भार्गवः प्रविवेश भवनद्वारम् । तत्राप्रमत्तो गजाननो गृहीतवेत्रः शासनं पितुः परिपालयन्नवर्तत । न्यवारयच्च तं भार्गवम् । अवदच्च भार्गवं विघ्नपतिः—'भो भार्गव, भगवान्महादेवः सह पार्वत्या मिथस्सरसालापविनोदितहृदयोऽन्तःपुरे निवसति । कथितं च लोकगुरुणा जनकेन, विना मदाज्ञां न कोऽपि प्रवेष्टुमर्हति ।' इति । निशम्य सोऽपि रामः पितरावन्तःस्थितौ विदित्वा 'पुत्रस्य को निरोधस्तयोर्दर्शने' इत्येवमाशंकमानो निवारितोऽप्यनुजेन विनायकेन पुनर्गन्तुमारभत । भूयोऽपि न्यषेधत्तं गजाननः । एवं मुहुर्मुहुर्निवार्यमाणः स भार्गवस्तमाहत्य पुनः प्रायतत । अत आसीत्तयोर्वाक्कलहः ।

अथ क्रमेण तावन्योन्यमारभेतां द्वन्द्वयुद्धाय । ततस्तयोः केशाकेशि, बाहूबाहवि च जन्यमभवत् । तदनु स रामः परशुना तं गणेशमताडयत् । तत्प्रहरणेनात्यन्तं प्रकुपितः स विनायकस्तं बलाद् गृहीत्वा बहु निपीड्य कृपया मुमोच । तथाविधं पराभवमनुभूय स भार्गवः पुनस्तस्योपरि परशुं मुमोच । स परशुरमोघतया तस्य दन्तमेकं बभञ्ज । महान्तं धरणीपतितं तं गजाननदन्तं तत्कालोत्पन्नमहोत्पातकानि च विलोक्य 'किमेतत् किमेतत्' इत्यन्तिकोपविष्टं कुमारमपृच्छत् पार्वती । तदा स कार्तिकेयः सर्वमप्युदन्तमकथयत् ।

तन्निशम्य रोषारुणितनयना गिरिजा परमेश्वरमवोचत्—'प्राणनाथ, भवतो धनुर्वेदं समन्त्रकम्, शस्त्राणि, शत्रुजयदं च कवचमधिगम्य स रामो निर्वक्रेण पराक्रमेण सानुचरं ससामन्तं कार्तवीर्यं तत्सुतांश्च संगरे निहत्य मध्यमं लोकं निःक्षत्रियं कृत्वा एवंविधां गुरुदक्षिणां भवते ददौ ।

तथा हि—'भवदाज्ञापरिपालकं प्रियसुतं द्वाररक्षकं निवारयन्तं

गणेशं मदोन्मत्तः स जामदग्न्यः परशुना दन्तहीनमकरोत् । एवं प्रदर्शितपराक्रमं तं भार्गवमेव विहायास्मान् त्रायस्व । अहं तु पुत्रसमन्विता पैतृकं गृहं गमिष्यामि ।' इत्येवं विलपन्ती सह पुत्राभ्यां प्रतस्थे ।

तदा निवार्य पशुपतिस्तां प्रियां मनसा सस्मार महाविष्णुम् । तदनुक्षणमेव कमलासहायः प्रादुर्बभूव तदग्रे । तत्रत्याः सर्वे विस्मिता अभवन् । सह पुत्राभ्यां गिरिजा सभक्तिकं ननाम महाविष्णुम् । स रामोऽपि पपात तस्य पादारविन्दयोः ।

भगवान्नारायणोऽपि पादपतितान् तान् सादरमुत्थाप्य पार्वतीमवोचत्—'अयि, पार्वति, समं पुत्राभ्यां परशुधरं राममंकपीठमधिवासय । भक्ताग्रेसरोऽयं विधूतपाप्मा संरक्षणीयः' इति । ततः स महाविष्णुर्गणपतेर्नाम्नां सहस्रम्, तस्यार्थतत्त्वं चाभिधाय, यतोऽयं गणाधिपः परशुना भग्नदन्तोऽभूत्, तत एतदादि एकदन्त इति प्रसिद्धिं गमिष्यतीति तामाश्वासयामास । ततः कमला तं गणाधिपमालिंग्य, शिरस्युपाघ्राय तदीयं शरीरं पाणिना पस्पर्श । स्पर्शमात्र एवाभवत्तस्य शरीरमपगतव्रणं दिव्यम् ।

स जामदग्न्यः श्रुतिशिरोवचनैरस्तौषीत्तौ पुराणदम्पती । ततः प्रमुदितान्तरङ्गौ तौ लक्ष्मीनारायणौ समयोजयतां तं भक्तं विनयविनमिताङ्गं दिव्याभिराशीर्भिः । अधिगताशीः स भार्गवस्तदनुज्ञया निवृत्य कैलासात् पितृदर्शनाभिलाषेण तदाश्रमं जगाम । एवं पार्वतीं तत्तनयं चाश्वास्य स्वालयमगच्छतां लक्ष्मीनारायणौ ।

---

## एकादशोऽध्यायः ।

प्रविश्य जमदग्नेराश्रमं स रामः कृतानतिः शिवलोकवृत्तान्तम्, अधिगतात्मवैराणि, मदोन्मत्तक्षत्रवर्गविदारणं, कार्तवीर्यविजयं च व्यजिज्ञपत् । पुत्रस्य पराक्रमं स्तुवन् जमदग्निः क्षत्रवर्गसंहरणादधिगतपाप्मानं पुत्रं तपश्चरणायादिदेश । ततः परशुधरः पितुरादेशानुसारेणाऽऽद्वादशवत्सरं तपस्तप्तुमकृतव्रणसहायो हिमगिरिमवाप ।

गतेषु कतिपयेषु वर्षेषु, कार्तवीर्यापत्यं शूरो नाम राजा सपरिवारो मृगयाविनोदी वनं प्रविवेश । हत्वा च बहुविधान् पशून् श्रान्तः विश्रमितुमिच्छन् , प्रच्छायशीतलतले कस्मिंश्चिन्नर्मदाप्रदेशे समुपाविशत् । पपौ स्वादुतरं नर्मदाजलम् । निकटवर्तिनमाश्रमं जमदग्नेस्तपोवनं विदित्वा प्रविश्य पितृविनाशहेतोर्जमदग्नेः शिरश्छित्वा निशितेनासिना ततोऽयं निरगच्छत् ।

व्यसुं जमदग्निं निरीक्ष्य बहु विलप्य तत्तनयाः कर्तव्याभावेन सहगमनाकांक्षिण्या रेणुकया सह पितुर्जडदेहं निरदहन् अकुर्वंश्च यथाविधि पितुरौर्ध्वदैहिकं कर्म ।

ततो व्यतीतेषु द्वादशाब्देषु, व्यपोह्य क्षत्रवधजनितमहापातकं पितृदर्शनाभिलाषी भार्गव आजगाम तदाश्रमम् । श्रुत्वा च परासू पितरौ विलप्य बहु, न्यवसत्तत्र त्रीणि दिनानि सह भ्रातृभिः ।

ततः पितृवधसंस्मरणसञ्जातशौर्योदग्रः परशुधरो रुद्र इव रुद्रमूर्तिः स्वप्रतिज्ञां संस्मरन् पुनस्तत्समक्षमेवं प्रतिज्ञामकरोत् । 'शृण्वन्तु भवन्तो लोकपालाः मुनयः मम भ्रातरश्च । निरपराधतपस्विजनोपद्रवकारिणो राज्यमदान्धान् युक्तायुक्तविचारशून्यान् नरपालापशदान् मदीयेन परशुना हत्वा तद्रुधिरेण पितृतर्पणं करिष्यामी'ति ।

ततः स रामो धनुष्टङ्कारेण भुवनानि प्रतिध्वनयन् माहिष्मतीं जगाम । श्रुत्वा तादृशं भयानकं धनुष्टङ्कारमायान्तं भार्गवं विदित्वा स कार्तवीर्यतनयः सह सेनया शलभ इवाग्निं तदभिमुखमभिययौ । न केवलं यथात्मपौरुषं प्रयुध्यमानोऽपि स नरपतिस्तदीयबाणानलस्याहुतिरभूत् , किन्तु माहिष्मतीनगरमपि । तावता असन्तुष्टः स रामो दिग्विजयाय प्रतस्थे । सर्वत्राप्यप्रतिहतगतिः स रामो विचरन्नात्मनो निशितकुठारानलस्याहुतीः कृत्वा राजन्यपुङ्गवान् सानुचरान्, निःक्षत्रियां वसुधां विधाय, आत्मनो दिग्विजययात्रां परिसमाप्य महेन्द्रमासाद्य पुनस्तपश्चकार ।

ततः क्षत्रियक्षेत्रेषु ब्राह्मणबीजोत्पादिता राजसुतास्तत्तद्विषयाधिपा अभवन् । भूयोऽपि स राम आत्मनो दिग्विजययात्रया वसुधां निःक्षत्रियामकरोत् । एवं स्वप्रतिज्ञानुरूपं एकविंशतिसंख्यया स्वस्य दिग्विजयेन सर्वमपि सागरवलयितं महीमण्डलं निःक्षत्रियं कृत्वा तद्रुधिरपूरणे कुरुक्षेत्रे पञ्च सरांसि निर्माय, तेन रुधिरेण पितृतर्पणमकरोत् । तदारभ्य तानि तीर्थानि श्यमन्तकसंज्ञया विराजन्ते । स सर्वां वसुन्धरामात्मसादकरोच्च । पितरश्च सन्तृप्ता अभवन् सुगतिं च प्रापुः । संप्रति ये श्रद्दधानाः प्रभासतीर्थपञ्चके तर्पणपिण्डदानादिना पितॄन् तर्पयन्ति, तेषामुत्तमो लोक इत्युद्घोषयन्ति पौराणिकाः ।

सन्तुष्टैः पितृभिरुपदिष्टः स प्रशान्तक्षत्रियावमर्षस्तद्वधजनितमहापातकप्रशान्तये त्रिवारं भूप्रदक्षिणमारचय्य, महेन्द्राचले कृताश्रमस्तपश्चकार । निशम्य मुनयः परशुरामं तदन्तिकमागत्य तेन कृतातिथ्याः, सकलपापराशिविनाशसाधकं हयमेधमुपादिश्य, तिरोहिताः ।

अथ स रामो यथाविधि हयमेधं कर्तुमारभत । तत्र कश्यपोऽध्वर्युतां, गौतम उद्गातृतां, होतृत्वं विश्वामित्रः, ब्रह्मत्वं मार्कण्डेयः ऋत्विक्त्वमपरे मुनयश्चाधिगम्य, शास्त्रोक्तेन विधिना परशुरामं हयमेधेन याजयामासुः ।

कृतावभृथस्नानः स रामः पराक्रमेणार्जितां सर्वां वसुन्धरां कश्यपाय सदक्षिणां ददौ । अपरानपि मुनीन् यथार्हं सम्भावयामास महार्हाभिर्दक्षिणाभिः । अत आरभ्येयं वसुन्धरा काश्यपीति पप्रथे । ततः स रामः सहैवाकृतव्रणेन तपश्चकार ।

ततः कदाचिद्विश्वामित्रस्य पुत्रः वसुर्नाम क्षत्रान्तकस्य भार्गवस्यान्तिकमुपगत्य बहु विनिन्द्य पुनः क्षत्रवधाय तं प्रचोदयामास ।

ततः प्रकुपितो भार्गवः पुनः परशुं धृत्वा प्रतिज्ञामकरोत् । कृपालुना मया बाला वृद्धाश्च क्षत्रिया विसृष्टाः । तानद्य निःशेषं हनिष्यामि इति वदन् परशुमभिमन्त्र्य सर्वराजाङ्गनागर्भस्थान्

शिशून् जहीति ब्रुवन्नत्यजत् । स्वयं च परिभ्रमन् आबालवृद्धं राजलोकमहन् । तदा केचित् वृद्धा राजानः स्त्रीवेषधारिणो भूत्वा आत्मानमरक्षन् ।

तदा कश्यपः स्वस्याज्ञामनवाप्य, पुनरुत्थाय प्रवृत्तं भार्गवं निशम्य, तस्य समक्षमुपेत्य प्रार्थयत—'महर्षिसत्तम ! भार्गव ! न युक्तं पुनस्तवेदं जगदिति । यत् समस्तक्षत्रवर्गगर्वपाटनमाचरितं पुरैव भवता, तत् शान्तिमवाप्नुहि । विरम पुनः क्षत्रवधात् । पुरा यागान्ते मह्यं दत्तेयं वसुमती । अतो मदीयात्प्रदेशादपसृत्य यत्र कुत्रापि वा गच्छे'ति ।

ततः प्रसन्नो भार्गवो धनुषि संहितं बाणं दक्षिणार्णवे प्रयोक्तुमैच्छत् । तदनुक्षणमेव महोदधिः प्रदेशं रामाय ददौ । तत्र भार्गवरामः प्रशान्ततेजाः सह शिष्येण तपः कर्तुमयतत । कश्यपोऽपि स्वायत्तीकृतसर्वमहीमण्डले राज्ञः अभ्यषिञ्चत् । ते च निरुपद्रवं राज्यं पर्यपालयन् ।

---

## द्वादशोऽध्यायः ।

---

(श्रीरामपरशुरामयोः समागमः ।)

कदाचित् रावणस्य पितामहो माल्यवान् महेन्द्रमासाद्य, तत्र कृततपसं समस्तक्षत्रहन्तारं भार्गवं रामं विलोक्य, पूर्ववैरिणो दाशरथे रामस्योन्नतिमसहमानो व्यजिज्ञपत् । 'भो निर्वक्रपराक्रमशालिन् ! भार्गव ! अस्ति कश्चिद्रामो नाम क्षत्रियकुमारः । स सीताविवाहाय त्वदीयस्य अस्त्रगुरोर्महादेवस्य चापं निमिवंशपालितं बभञ्ज । गुरुतिरस्कारिणं कथं सहते भवा'निति ।

अथ गुरोर्महादेवस्य पराभवं तदीयधनुर्भङ्गजमसहमानो यथापूर्वं प्रकुपितः परशुधरः प्रतस्थे । समयेऽस्मिन् दाशरथिः सह नवोढया सीतया , तथाविधैः भ्रातृभिः , पित्रा दशरथेन , परिवारेणानुगम्यमानः पथि ददर्श भार्गवेण रामेण । दृष्ट्वा च दशरथो मूर्तिम-

न्तं कोपमिव भयानकं भार्गवं, चकितचकितं रामादीन् विलोक्य, कृताञ्जलिः सविनयं प्रणम्य स्वपुरोहितं वसिष्ठं, येन केनापि विधिना भार्गवं सान्त्वयितुं चोदयामास । नियोजयामास चाबलाजनरक्षणाय परिमितेन सैन्येन सह भरतशत्रुघ्नौ ।

अथ प्रलयकालजलदभीकरेण स्वरेण प्रतिध्वनितभुवनान्तरेण 'क्व रामः, क्व दशरथः ?' इति वदन् सोद्वेगं भार्गवो रामः कुठारपाणिः समक्षमाविरासीत् । तदा वसिष्ठादिभिः निवार्यमाणोऽपि रामो दाशरथी रामस्य भार्गवस्य समक्षमागत्य 'भो आर्य, सोऽयं रामो दाशरथिः प्रणमति भार्गवरामम् । अयं च ममानुजो लक्ष्मणाभिधः' इति विनयाविनमिताङ्गः प्रत्युवाच ।

स भार्गवो दाशरथिं, तस्य रूपं, विनयं, सौजन्यं च विलोक्य दयार्द्रहृदयोऽपि भर्गचापविभङ्गजनितामर्षेण वाक्येन 'भार्गवस्यायं कुठारस्त्वदीयं कण्ठमलंकर्तुमभिलषति' इति दाशरथिमवोचत् । तदा रामो दाशरथिः 'अहो ! कुमारविजये शिष्यप्रेम्णा महेश्वरदत्तोऽयं परशुः किमेष भवति ? साधु साधु, परशुनानेन भगवान् भर्गः खण्डपरशुरिति, भार्गवोऽयं परशुराम इति च प्रसिद्धिं गतौ । किं चानेनैवास्य यशो रोदसी व्याप्य विराजते । अपि चास्य जनको जमदग्निः । गुरुर्महादेवः, दानं चतुःसमुद्रमण्डितं महीमण्डलं, तपोनुपमं च भवति । कथं वाऽस्य महिमानं वर्णयामि' इत्येवं प्रशशंस भार्गवरामम् ।

ततो भार्गवः 'कुमार, दाशरथे ! दर्शं दर्शं त्वदीयं सौजन्यमाश्चर्यमाविर्भवति । एवं विनीतं कथं हन्मि । इति मां बाधते दया' । इति प्रत्यवदत् । तदा लक्ष्मणः सोल्लुण्ठमभाषत 'परशुधर ! नूनं दयालुर्भवान्' इति । निशम्यैतत् रोषारुणितलोचनो भार्गवः प्रत्युवाच लक्ष्मणम् 'बालाविति, विनयविनमिताङ्गाविति, नवोढाविति, युवामुपेक्षितौ मया । कुतो मम दया योऽहं बाल्य एव पितुः शासनात्कृतमातृवधः, निर्दयं त्रिःसप्तकृत्वो जगतीपतीनां संहर्ता,

बहुवारमबलागर्भविच्छेदकः, सर्वराजन्यवधजनितरुधिरपूरिततीर्थपञ्चके भूयो भूयोऽवगाह्य कृतपितृतर्पणः। तदायाहि राम, दाशरथे! प्रथमं मम हस्तगतं विष्णुचापमादाय तत्र गुणमारोपयतु भवान् । ततो बाण'मित्यादि वदन्नन्तिकमाजगाम स भार्गवः।

अत्रान्तरे दशरथः श्रुत्वा रामयोः संवादं, भीतभीतेन चेतसाऽभितो वसिष्ठमभिगम्य 'क्षत्रान्तको भार्गवः कुमारौ युद्धाय चोदयति । तावपि सन्नद्धौ भवतः । आपतितमत्याहितम् । कथं वा वारणीया एते । निवारयामि च पुत्रावहम् । निवार्यतामयं भार्गवस्त्वया' इति प्रार्थयामास । तदा वसिष्ठो विहस्याब्रवीत् 'भो राजन्, किमेवं बिभेति भवान्? भवतस्तनयौ न केवलमानुषौ। किंतु विष्णवंशसम्भूतौ । त्रिषु लोकेषु न कोऽपि शक्नुयात्तौ विजेतुम् । तस्मादेवं भीतभीतेन चेतसा किं निमित्तं मुहुर्मुहुर्विशङ्कसे पराजयम्। धैर्यमवलम्बस्व' इति।

भूयो भूयः समाह्वयमानं युद्धाय भार्गवं वसिष्ठोऽब्रवीत्– 'अयि भार्गव! यदि भवान् गुरौ भक्तिमान्, तर्हि मामपि गुरुं मत्वा मदीयं वाक्यनिचयं शृणोतु सम्यग्भवान् । एकेनाचरितोऽपराधः । तत्फलं सर्वोऽपि राजवंशोऽन्वभवत् । तदीयापराधं मनसि निधाय, त्वयाऽऽबालवृद्धं सर्वराजन्यकुलमहन्यत। पुनश्च तदर्थमेव यतसे । न युक्तमयुक्तमाचरितुम् । अतो निवर्तस्व । तपसा मोक्षं प्राप्नुहि।' इति। ततो भार्गवो हितोपदेष्टारं वसिष्ठमवदत् 'महामुने! वसिष्ठ! त्वद्वचनातिक्रममहापातकविमोचनाय चिरं तपः करिष्यामि । यथा प्रियं मम शस्त्रधारणं न तथा मोक्षेच्छा, अतो न त्यजामि शस्त्रम्' इति।

एवमादिहितोपदेशमतिक्रान्तं भार्गवं प्राप्य श्रीरामः 'प्रदर्शय तावकं वैष्णवं चापम् । गुणमारोपयामि' इति वदन् तस्य भार्गवस्य कराद्वैष्णवं चापमाचकर्ष बलात् सह तदीयेन बलेन। तदा सहसैवोदगच्छत्किमपि दिव्यं तेजो भार्गवस्य शरीरात् । निमिषतां च

सर्वेषां प्राविशत्तत्तेजः श्रीरामम् । सन्दधे च धनुषि दिव्यं अमोघं शरं स दाशरथिः । वसिष्ठादिभिर्वार्यमाणो दाशरथिः 'धनुषि संहितो मदीयो बाणो न पुनरुपसंहृतो भवति । त्वं चाग्रजन्मा । कुत्रेदानीमस्यावकाशः ' इति तेजोविहीनं भार्गवमवदत् । ततस्तेनो पादिश्यमानमार्गो दाशरथिस्तस्य परशुरामस्य स्वर्गमार्गमच्छिनत् । ततो दिव्येन चक्षुषा भगवदंशेनावतीर्णं रामं दाशरथिं विदित्वा स्मृत्वा च पुरा कथितं भगवद्वाक्यं स भार्गवो राममवदत्— 'भोः कुमार ! जानामि त्वां भगवदंशेनावतीर्णम् । तत् क्षमस्व अज्ञानेनोक्तानि मदीयानि वाक्यानि । तपःसम्पादितं मदीयं पुण्यलोकं जह्यमोघेन बाणेन । गृहाणेदं धनुः । अनेन दण्डकारण्यवासिनो निशाचरान् समूलं निहत्य पाहि मुनीन् । ' इति । तदनुज्ञातो रामो भार्गवः तपोवनं विवेश । तत्रत्याः सर्वे सन्तुष्टाश्चाभवन् ।

तपोवनं प्रविष्टो रामो भार्गवस्तपसे महेन्द्रमवाप । तत्र चिरं आत्रेतायुगान्तं तपस्तेपे स भृगुनन्दनः ।

---

## त्रयोदशोऽध्यायः ॥

### ( अम्बायाः स्वयंवरः )

द्वापरे युगे शान्तनवो गाङ्गेयः कौमारेऽभ्यस्तानेकशास्त्रचयविशारदः, धनुर्विद्यावैदुष्यमभिलषन्, पर्यटन्, चिरादभिययौ महेन्द्रं नाम महीध्रम् । विचरंस्तत्र तपसि स्थितं भार्गवं रामं ददर्श । तत्र तस्थावानियमान्तं तस्य रामस्य स गाङ्गेयः ; परिचर्यादिभिस्तस्य प्रियोऽभवच्च ।

ततस्तेन तदागमनप्रयोजनं पृष्टः धनुर्विद्यामुपदिशन्त्विति सविनयमयाचत स शान्तनवः । तथेत्यनुमेने शिष्यत्वेन तस्य परिग्रहणं स रामः । तत आरभ्याप्रमत्तः परिचर्यायां विद्याग्रहणे चाभवत् । यथोपदिष्टं परिचयं कुर्वन् शास्त्रेषु, तस्य भार्गवस्य कृपायाः पात्रमभवत् स गाङ्गेयः । ततः सुचिरं तस्य परिचर्यया तमानन्दय-

च । कृतास्त्रः स गङ्गापुत्रः तं भार्गवमापृच्छय स्वं निकेतनमगात् ।

ततो महान् कालः समतिचक्राम ।

जातुचित् शन्तनुर्विहारार्थं गङ्गापरिसरे पर्यटन् दाशराजस्य कन्यां योजनगन्धीं विलोक्य, मुमोह । शन्तनोरिङ्गितं विदित्वा स दाशराजः शान्तनवस्य ब्रह्मचर्यसमयेन स्वीयां कन्यां तस्मा अदात् । तदारभ्य गाङ्गेयो भीष्म इति प्रसिद्धिं गतः ।

क्रमेण शन्तनोर्द्वौ पुत्रावसूत सा सत्यवती । तौ चित्राङ्गदो विचित्रवीर्यश्च । कौमारमतीत्य युवानावभवताम् । चिरं न्यायेन प्रजाः परिपाल्य दिवमवाप शन्तनुरन्त्ये वयसि ।

सत्यव्रतः शान्तनवोऽनुजं चित्राङ्गदं राज्येऽभिषिच्य, सत्यवतीमतोषयत् । सोऽपि कञ्चित् कालं राज्यभोगाननुभूय, विपरीतदैवो दिष्टान्तमाप । पुनरपि सत्यवत्या मते स्थितः स सत्यप्रतिज्ञः कनीयांसं विचित्रवीर्यमभ्यषिञ्चत् । स धर्मतः प्रजा अनुरञ्जयन् ज्येष्ठस्य भ्रातुरादेशकरणे बद्धादरोऽभवत् । मातुराज्ञया सत्यव्रतः कुलादनुरूपादनुजस्य दारक्रियां कर्तुमैच्छत् ।

तदाऽश्रौषीत् काशिराजस्य सुतानां स्वयंवरवृत्तान्तं गाङ्गेयः । सन्ति काशिराजस्य तिस्रः कन्यकाः । अम्बा अम्बिका अम्बालिकेति । समाहूताश्च सर्वे राजकुमारास्तेन काशिराजेन । प्राविशच्च स्वयंवरमण्डपं सर्वं नृपमण्डलम् । देवव्रतोऽप्यगात्तत्पुरीम् । तत्र काशिपतिना वीर्यशुल्कास्ता ज्ञात्वा, पश्यत्सु राजकुमारेषु, 'भीष्मः शान्तनवः कन्या हरती'ति पुनः पुनः वदन् कन्या रथमारोप्य, तान्नरपतीन् समाह्वयत समराय । तन्निशम्य क्रुद्धास्ते पार्थिवाः सारथीनचोदयन् तं प्रति । पर्यवारयंश्च समन्तात्तं रथैश्चाश्वैरुदायुधाः । तदा दानवान् देवराडिव तान् नृपानजयत् शरवर्षेण शान्तनवः । जित्वा च महीक्षितः स सत्यव्रतो हास्तिनं पुरं प्राप्य, स्वमात्रे सत्यवत्यै भ्रातुरर्थाय समानीतास्ताः कन्यकाः प्रादर्शयत् । संतुष्टा सा मूर्ध्न्युपाघ्राय, प्रयुज्याशिषः, ताभिर्विचित्रवीर्यस्य परिणयं कारयेति तमाज्ञापयत् । तद् ज्ञात्वा तासामम्बा नाम ज्येष्ठा

कन्या सव्रीडा भीष्ममवदत्—

1 भीष्म त्वमसि धर्मज्ञः सर्वशास्त्रविशारदः ।
श्रुत्वा मे वचनं धर्म्यं न्याय्यं कर्तुमिहार्हसि ॥

2 मया साल्वपतिः पूर्वं मनसाऽभिवृतो वरः ।
तेन चास्मि वृता पूर्वं रहस्यविदिते पितुः ॥

3 कथं मामन्यकामां त्वं राजधर्ममधीत्य वै ।
वासयेथा गृहे भीष्म कौरवः सन्विशेषतः ॥

4 एतद्बुद्ध्या विनिश्चित्य मनसा भरतर्षभ ।
यत्क्षमं ते महाबाहो तदिहारब्धुमर्हसि ॥

5 स मां प्रतीक्षते व्यक्तं साल्वराजो विशांपते ।
तस्मान्मां त्वं कुरुश्रेष्ठ समनुज्ञातुमर्हसि ॥

6 कृपां कुरु महाबाहो मयि धर्मभृतां वर ।
त्वं हि सत्यव्रतो वीर पृथिव्यामिति नः श्रुतम् ॥

श्रुत्वा च तस्याः प्रार्थनां मनसा विमृश्य ताममुञ्चत् स भीष्मः ।

---

## चतुर्दशोऽध्यायः ।

### ( शरणागतिः )

अभिप्रतस्थे च साल्वपुरं सा त्वम्बा वृद्धैर्द्विजातिभिः धात्र्या चानुगता । प्रविश्य च तन्नगरं सा, तमासाद्य राजानं, सविनयमेषमवदत् 'भो राजन्, प्रागहं त्वां मनसा वृतवत्यस्मि । त्वया चाप्युपमन्त्रिता । तदभिनन्द मा'मिति । एवं पुनः पुनः वदन्तीं तामन्यपूर्वेयमिति प्रत्याचख्यौ स साल्वपतिः । तथोभाभ्यां बन्धुभिश्च परित्यक्ता सा, विनिन्दन्ती स्वानि भाग्यानि, निष्क्रामन्ती नगरात् बहु निनिन्द वीर्यशुल्केन पण्यस्त्रीव प्रचोदयन्तं पितरम् । तदनु सा बहु विचिन्त्य, निदानमस्या आपदो देवव्रतं मत्वा प्रत्यपकर्तुमिच्छन्ती तदुपायमचिन्तयत् । ततः सा महात्मनां तापसानामाश्रममगच्छत् । न्यवेदयच्च तेभ्यः सविनयं स्वीयमुदन्तम् । निशम्य

ते मुनिवरास्तामाश्वास्य, पर्यालोचयन् ।

पितुर्निवेशनं गच्छेति, नार्याः पतिरेव गतिरिति वदत्सु तापसेषु, तपस्तप्तुमभीप्सामीति वदन्त्यां तस्यां, होत्रवाहनो नाम तस्या मातामहस्तत्रागतः। पूजितश्च तैर्यथाविधि, श्रुत्वा चाम्बाया वृत्तान्तं, ज्ञात्वा च तां दुहितुर्दुहितरं, स्वयमङ्कमारोप्य, तद्दुःखदुःखितस्तामाश्वासयत् । यथावद्विस्तरेण निशम्य तस्या वृत्तान्तं मनसा सम्यगालोच्य, 'वत्से ! मद्वचनाद्रामं जामदग्न्यं शरणं गच्छ । स च रामो मे सखा प्रीतियुक्तः । मयि कीर्तिते स रामस्त्वन्मनीषितं कार्यं करिष्यति ' इति वदति राजर्षौ होत्रवाहने, यदृच्छया तत्रागतोऽकृतव्रणो नाम भार्गवरामस्य प्रियानुचरः। तस्माद्विदितरामागमनास्तापसास्तेन सह कथाः कथयन्तः स्थिताः । तदा मुनिभिरम्बया च कथितकथ्यः स महातेजा अकृतव्रणस्तस्यास्तद्दुःखस्य निदानं भीष्ममेव मत्वा, सविमर्शं तस्य प्रतीकारं भार्गवेण कारयितुमैच्छत् ।

दिष्ट्या समागतं भार्गवं रामं निरीक्ष्य, प्रत्युद्गम्य, यथाविधि सत्कृत्य, ते तापसाः, स च राजर्षिः होत्रवाहनः, साऽप्यम्बा प्राञ्जलयः पुरतः तस्थुः । यथान्यायं पूजितस्तैः सह निषसाद । तदनु तावुभौ सादरं पूर्वव्यतीतानि कथयन्तावभूताम् । तदा राजर्षिः 'केयं तपस्विनी'ति रामेण पृष्टोऽब्रवीत् । तां स्वस्य दौहित्रीं काशिराजसुतां कथयामास । ततः सा रुदती तस्य रामस्य चरणयोः पतित्वा, शरण्यं भृगुनन्दनं शरणं प्रपेदे ।

तस्यास्तादृशमभिनवं रूपं, वयःसौकुमार्यं च दृष्ट्वा, तदुदन्तं सर्वमपि ज्ञात्वा, तद्वचनैस्तस्या व्यसनस्य भीष्म एव मूलमिति विदित्वा, सोऽवददम्बाम्—'राजपुत्रि, त्वामहं पुनः शान्तनवं प्रति प्रेषयामि । सोऽपि मदन्तेवासी मदीयां वाचमङ्गीकृत्य भूयस्त्वां ग्रहीष्यति । नो चेदहं सामात्यं धक्ष्यामि रणे तं भीष्मं शस्त्रतेजसा । अथवा यदीच्छासि पुनस्त्वं साल्वं नयामि' इति ।

तदा तया भीष्माशया साल्वगमनं , चारित्रपरिशङ्कया तेन प-

रित्यकमात्मानं च निवेद्य, तमेवास्य व्यसनस्य मूलमाख्याय, तद्वधमयाच्यत ।

तदनु तथैवाकृतव्रणेनापि प्रार्थितः, स रामो मुनिभिस्तया राजपुत्र्या च सहितः कुरुक्षेत्रमगच्छत् । स्वप्रतिज्ञानुरूपं साम्नैव कार्यं साधयितुमिच्छन् न्यवेदयत् स्वागमनं भीष्माय । तदा शान्तनवः स्वगुरोरागमनं ज्ञात्वा, जवेनाभिगच्छन् प्रीत्या तेजोनिधिं तं गुरुं विधिना पूजयामास ।

---

## पञ्चदशोऽध्यायः ॥

### ( भीष्मेण सह युद्धम् । )

परशुरामः—अयि भोः प्रियच्छात्र ! शान्तनव ! पश्येमां कन्यकाम् । सेयमन्यमनस्का प्रथमं त्वया स्वयंवरे समानीता । पुनः परित्यक्ता च । तथाऽपि साल्वेन चारित्रशङ्किता नाङ्गीकृतोभाभ्यां परित्यक्तेयमनाथेव परिभ्रमन्ती मां शरणं गता । गुरोर्मम वचनादेनां पुनः परिगृहाण । तदा नितरां सन्तुष्टो भविष्यामि ।

भीष्मः—ननु गुरो ! भवदुक्तं सर्वमपि सत्यमेव । परं न मदर्थमियमाहृता । किन्तु मदीयस्य भ्रातुः परिग्रहत्वेनानीता । न पुनरेषा प्रथमं न्यवेदयदेतस्याश्चरितम् । तथाऽपि विज्ञाय तदीयं तथाविधं मनः, तदनुक्षणमेव परित्यक्ता च । न पुनः परिगृह्णामि । न तत्रापराधलेशोऽपि मम । 'न भयान्नाप्यनुक्रोशान्नार्थलोभान्न काम्यया। क्षात्रं धर्ममहं जह्यामिति मे व्रतमाहितम् ॥'

परशु—(सकोपम्) श्रुतं मया त्वदीयं व्रतम् । शिष्यः सन् भवान् गुरोर्ममैतद्वचनं न चेत्करिष्यति सहामात्यं त्वामहं हनिष्यामि । सज्जो भव ।

भीष्मस्तं क्रोधपर्याकुलेक्षणं मृदुभिर्वचोभिः पुनः पुनः प्रार्थयामास । तथाऽपि स भार्गवो न शशाम । तदा रामः कोपेनावदत् 'यदि मां गुरुं जानीषे त्वम् , तदेमां काशिराजसुतां मत्प्रियार्थं पुन-

गृहाण । नान्यथा शान्तिर्विद्यते मम' । इति । तदा स देवव्रतस्तत्राङ्गीचकार । पुनः सविनयं तस्य पादयोः पतित्वैवं प्रार्थयति स्म—

"गुरुत्वं त्वयि सम्प्रेक्ष्य जामदग्न्य पुरातनम् ।
प्रसादये त्वां भगवंस्त्यक्तैषा तु पुरा मया ॥
को जातु परभावां हि नारीं व्यालीमिव स्थिताम् ।
वासयेत गृहे जानन् स्त्रीणां दोषो महात्ययः ॥
न भयाद्वासवस्यापि धर्मं जह्यां महाव्रत ।
प्रसीद मा वा यद्वा ते कार्यं तत्कुरु मा चिरम् ॥
अयं चापि विशुद्धात्मन् पुराणे श्रूयते विभो ।
मरुत्तेन महाबुद्धे गीतः श्लोको महात्मना ॥
'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥'
स त्वं गुरुरिति प्रेम्णा मया सम्मानितो भृशम् ।
गुरुवृत्तिं न जानीषे तस्माद् योत्स्यामि वै त्वया ॥"

... ... ...

(महाभारतात्)

इत्येवमादि वदन् स भीष्मस्तेन सह योद्धुमेवाङ्गीचकार । न पुनस्तां ग्रहीतुम् ।

ततो रामः कुरुक्षेत्रमगात् । भीष्मोऽपि सत्यवत्या कृतस्वस्त्ययनः प्रतिनन्दितः कुरुक्षेत्रं सांग्रामिकेण रथेन प्रस्थितः कवची सतूणीरः सर्वै राजलक्षणैरुपेतो रणक्षेत्रं कुरुक्षेत्रमुपाययौ । ततस्तौ गुरुशिष्यौ सङ्गतौ ।

ततो देवी जाह्नवी पुत्रस्य समीपमागत्य तेन विदितसर्ववृत्तान्ता तमेवमवदत्—

'मा मैवं पुत्र निर्बन्धं कुरु विप्रेण पार्थिव ।
जामदग्न्येन समरे योद्धुमित्येव भर्त्सयत् ॥
किं न वै क्षत्रियहणो हरतुल्यपराक्रमः ।
विदितः पुत्र रामस्ते यतस्त्वं योद्धुमिच्छसि ? ॥' इति ।

जनन्यास्तानि वाक्यानि निशम्य स भीष्मः कृताञ्जलिर्मातरमब्रवीत् सर्वमादितः स्वयंवरवृत्तान्तम् । ततः सा भागीरथी पुत्रेण सह तं भार्गवं रामं युद्धाद्विरमेति बहुशः प्रार्थितवत्यपि तेन प्रत्याख्याता । पुनः पुत्रमपि निवर्तयितुमशक्ता यथागतं गताऽभवत् ।

ततस्तौ धर्म्यं युद्धं कर्तुमारभेताम् । दिव्यं रथमारुरोह स जामदग्न्यः । अकृतव्रणः सारथिरभवत् । विधिवदभिवाद्य गुरुं स भीष्मः कृताञ्जलिर्जयमभिकांक्षन् रथमारुह्याग्रतः स्थितः । तदनु रामः पूर्वं प्राहरत्तं शान्तनवम् ।

शरविद्धः शान्तनवो भार्गवस्य ब्राह्ममंशं नमस्कृत्य, क्षात्रमंशं प्रहर्तुमारभत । निशितेन भल्लेन भार्गवस्य धनुषः कोटिमच्छिनत् भीष्मः । स सायकैरनेकैस्तं निर्दयं प्राहरच्च । तैर्विद्धः स रामः क्षतजोक्षितसर्वाङ्गो रुधिरं क्षरन् रक्ताशोक इवाबभौ । ततोऽन्यद्धनुरादाय क्रोधसमन्वितो रामस्तं भीष्मं मर्मभेदिभिः शरैरविध्यत् । ततोऽभ्यर्दितस्तेन भीष्मेण मन्दचेता इवाभवत् स रामः ।

तथाविधं तं निरीक्ष्य देवव्रतो मनस्येवमचिन्तयत् । 'धिगिदं युद्धम् ! गुरुं द्विजातिं धर्मात्मानं च निर्दयो भूत्वैवं समताडयम् ।" इति । तदसहमान इव सहस्रांशुरपि जगामास्तम् । तदा युद्धमुपारमत ।

उदिते सूर्ये च भूयः प्रावर्तत संग्रामः । प्रथमं तौ शरैरन्योन्यं प्राहरताम् । तदस्त्रैरेवास्त्राणि खण्डितानि ज्ञात्वा तौ वायव्यं गुह्यकेन, आग्नेयं वारुणेन च प्राहरताम् । तदा परशुरामस्तस्मै भीष्माय भृशं चुकोप । तस्योरसि बलवदविध्यच्च । तेन शान्तनवः किञ्चित्प्रचलितो रथ एव मुमोह । तत् दृष्ट्वा रामस्यानुचरा हृष्टा विचुक्रुशुः । क्रमेण लब्धसंज्ञो गाङ्गेयस्तं रामं प्रहर्तुमारभत ।

बाणैर्बाणान् निवारयन्नपि भीष्मस्य प्रदीप्तेन केनापि बाणेन व्याविद्धो रामः समरे मुमोह भूमावपतच्च ।

अम्बायाः शीतलोपचारेणाचिराल्लब्धसंज्ञो रामः पुनर्द्विगुणी-

कृतकोपः शरवर्षमवाकिरत्। तदन्तरिक्ष एव न्यवारयच्छरवर्षेण शान्तनवः। ततः शरसंघर्षेण सञ्जातः पावकः सर्वं भस्मसादकरोत्। ततो रामः पश्चिमां सन्ध्यामुपासितुमगमत्।

अन्येद्युस्तुमुलं युद्धमभवत्।

तस्मिन्नायोधने रामबाणप्रपीडितः शान्तनवस्य सूतो रथादपतत् प्राणान् प्रजहौ च। तद्दुःखदुःखितं भीष्मं स रामः शरैर्गाढं प्राहरत्। तदा भीष्मो भूमावपतत्। तं निहतं मत्वोच्चैर्निननाद रामः। स्वजनन्या गङ्गाया उपचारात् संज्ञां प्राप भीष्मः। पुनर्भीममायोधनमकरोच्च। एवं धर्मेण प्रयुध्यमानयोस्तयोर्दिनानां त्रयोविंशतिरतिचक्राम।

सर्वास्त्रकोविदेन गुरुणा प्रतियोद्धुमशक्तो भीष्मः शयानो निशि शयने, देवान् प्रार्थयामास।

तदा सन्तुष्टास्तस्य पुरतः प्रादुरभवन् देवाः स्वप्ने। ते तं प्राबोधयन्। तस्याभयं दत्वा रामाविदितं प्रस्वापं नामास्त्रं ददुः। अनेनास्त्रेण रामो न क्षयं यास्यति किं तु स्वप्स्यति। एवमादि कथयित्वा देवास्तिरोहिताः।

व्यतीतायां च रात्रौ, स्वस्मिन् दैवानुकूल्यं प्रस्वापनास्त्रप्राप्तिं च बहु प्रशशंस भीष्मः।

ततः प्रावर्तत समरः। बहुभिर्नाराचैर्विद्धो रामेण भीष्मः बहु विव्यथे। तौ ब्राह्ममस्त्रं परस्परजिघांसया धनुषि सन्दधतुः। ते उभे ब्राह्मे अस्त्रे मार्गमध्य एव संलग्ने भवतः। तयोः समागमेन व्योम्नि केवलं तेज एव प्रादुरभवत्। सर्वाणि भूतानि ऋषयो देवताश्च परमं सन्तापं जग्मुः। चचाल च वसुन्धरा।

तदनु गाङ्गेयो रामं प्रति प्रस्वापनास्त्रं प्रयोक्तुकामोऽभवत्। धनुषि सन्दधे च तदस्त्रम्। तदाऽन्तरिक्षे स्थिता देवा नारदं तन्निवारणे समादिशन्। ततो नारदः सहसा भीष्ममासाद्य, निवार्य तदुद्यमात् जगादैवम्—

'एते वियति कौरव्य दिवि देवगणाः स्थिताः ।
ते त्वां निवारयन्त्यद्य प्रस्वापं मा प्रयोजय ॥

रामस्तपस्वी ब्रह्मण्यो ब्राह्मणश्च गुरुश्च ते ।
तस्यावमानं कौरव्य मा स्म कार्षीः कथंचन ॥'

इति ।

ततो गाङ्गेयो नारदवचनात् प्रतिसंहृतवान् तन्महद्-स्त्रम् । साधु साध्विति सर्वे देवगणास्तं प्रशशंसुः । तत्सर्वं निरीक्ष्य रामः सहसा गाङ्गेयमुपसृत्य जितोऽस्मि भीष्मेणेति प्रतिजगाद । तदा देवगणैः सम्प्रार्थितौ भीष्मो रामश्च कथंचन तस्मात् युद्धान्निवृत्तावभवताम् । तदा सशिष्यो देवव्रतो गुरोर्जामदग्न्यस्य पादयोः पतित्वा तं क्षमामभ्यर्थयामास । रामोऽपि प्रसन्नो भूत्वा 'युद्धेऽस्मिन् तोषितोऽहं भृशं त्वये'ति वदन् तमालिलिङ्ग । तदा पुरतो दीनेन वदनेन स्थितां तामम्बां वीक्ष्य दीनया वाचा तेषां समक्षमेवमवदत्— 'काशिराजसुते ! प्रत्यक्षमेव भवत्या यथाशक्ति मया युद्धं कृतम् । पौरुषं च परं प्रादर्शयम् । न चैवमपि शक्नोमि तं जेतुम् । निर्जितो ह्यस्मि भीष्मेण महास्त्राणि प्रयुञ्जानेन । अतो यथेष्टं गच्छ' इति । तदाकर्ण्य सा प्राह— 'भगवन् ! सत्यमेव यथाशक्ति यथोत्साहं कृतं मामकं कार्यम् । अनिवार्यपराक्रमः स भीष्मः । नाहं पुनः साल्वं प्राप्स्यामि न भीष्मम् । उग्रं तपस्तप्त्वा तादृशं बलं सम्पाद्य तं स्वयमेव समरे जेष्यामि इति । तदा सन्तुष्य स रामः सह मुनिभिस्तमेव महेन्द्रं गिरिमाससाद ।

परशुरामचरितम् समाप्तम् ।